सप्तमोऽध्यायारम्भः

"यस्य निःश्वसितं वेदा यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः पातः कुरुक्षेत्रे युदर्णवम् ॥१"

"वेदो गीता तथा गीता वेद एव नसंशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥२"

मय्यासक्तेति=हे पार्थ! हे अर्जुन! योगं दुःखसंयोगवियोगात्वं योगम् युञ्जन् योक्तुम् इच्छन् मदाश्रयः अहं परंब्रह्मैवाऽऽश्रयोऽवलम्बनं यस्य स तथाभूतः सन् मयि परे ब्रह्मणि एव आसक्तमनाः आसक्तं लग्नं मनो यस्य तथाभूतः सन् त्वं मां मत्स्वरूपं परमात्मानमित्यर्थः। असंशयं संशयमन्तरेणैव समग्रम् अशेषतया यथा येन प्रकारेण ज्ञास्यसि ज्ञानविषयं करिष्यसि, तत् तज्ज्ञानमयं तथा शृणु ॥१॥ अहं परब्रह्मस्वरूपः कृष्णः ते तुभ्यम् अर्जुनाय जीवमात्राय वा इदं ज्ञानं ब्रह्माऽवबोधः सविज्ञानम् अनुभवेन ज्ञानेन सहितम् अशेषतः यथावस्तुज्ञानं पूर्णतया स्यात् तथैव समग्रं वक्ष्यामि कथयिष्यामि। यत् मदुपदिष्टं विज्ञानसंयुक्तं ज्ञानं ज्ञात्वा अनुभूय इह अस्मिन् जन्मनि भूयः पुनः अन्यत् अपरं ज्ञातव्यं वस्तु न अवशिष्यते पुनर्ज्ञेयान्तरशेषो न विद्यते ॥ २ ॥

श्रीभगवानुवाच

(मू॰ गी॰) मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः। असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥ ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः। यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥२॥

(वेद गी॰) यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभिमन्याते अन्धाम्। कतरो मेनिं प्रतितं मुचाते य ईं वहते य ईं वा वरेयात् ॥११

ज्ञानयोगिनः
भक्तियोगिनः

ऋ॰ अष्ट॰ ८ अध्या॰ ५ व॰ १० मं॰ ११ (मंड॰ १० अनु॰ २ सू॰ २७ मं॰ ११)

यस्येति=यस्य पुरुषस्य दुहिता ~~[illegible]~~ अनक्षा आत्मेन्द्रियरहिता ~~[illegible] अचेतना~~ सती जातु कदाचिदपि आस मयि तिष्ठति प्राप्नोति। अर्थात् यः मय्यासक्तमतिः भवति। कः अन्धां ~~[illegible]~~ स्वमनोवृत्तिं विद्वान् ~~[illegible] जानन्~~ अभिमन्याते अभिमन्यते, आत्मनि आश्रयप्रदानेन पूजयति। कतरः पुरुषः तम् अनात्मज्ञानमयं प्रसिद्धं मेनिं वज्रमयं पापं प्रतिमुचाते प्रतिमुञ्चति। यः मुमुक्षुः पुरुषः ईम् एनं ~~[illegible]~~ वहते धारयति। यः ईम् एनं परमात्मानुभवज्ञानं वरेयात् वृणोति ॥ ११ ॥ उप॰ बृ॰ अ॰ २ [illegible] ४ श्रु॰ १४ "येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयादिति," ~~श्वेताश्व॰ अ॰ ४ श्रु॰ १५ "यस्मिन् युक्ता~~ ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति," श्वेता॰ उप॰ ३ श्रु॰ ८ "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय,"

परमात्मनः ~~[illegible]~~
~~[illegible]~~

मनुष्याणामिति = मनुष्याणां सहस्रेषु असंख्यातेषु मनुष्येषु कश्चित् पुरुषः सिद्धये ब्रह्मप्राप्तिसिद्धये यतति यत्नं करोति। यतताम् ब्रह्मज्ञानसिद्धये यत्नम् कुर्वताम् अपि सिद्धानां ब्रह्मजिज्ञासूनां मध्ये कश्चित् पुरुषः एव मां यथावत्स्वरूपं परमात्मानं तत्त्वतः यथार्थतः वेत्ति जानाति ॥२॥

(मू॰गी॰) मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥२॥

(वेदगी॰) दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना।
अभ्रादिव प्रस्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत् ॥
ऋ॰ अष्ट॰ ८ अध्या॰ ३ व॰ ६ मं॰ ३ (मंड॰ १० अनु॰ ६ सू॰ ७५ मं॰ ३)

दिवीति = भूम्योपरि भूमेरुपरि दिवि प्रकाशमयब्रह्मयोगसमाधौ स्वनः शब्दब्रह्मोपासकः कश्चित् जिज्ञासुः यतते ब्रह्मप्राप्तिसिद्धये यत्नं करोति। अयं ब्रह्मोपासकः (अयमेव ब्रह्मवेत्ता) ~~सत~~ सिद्धः भानुना ब्रह्मप्रकाशेन अनन्तम् अपर्यन्तम् पारावाररहितं शुष्मं तेजः उदियर्ति उद्गच्छति प्राप्नोतीतियावत्। अभ्रादिव अन्तरिक्षादिव वृष्टयः वर्षणशीलाः मेघा यथा प्रस्तनयन्ति शब्दं कुर्वन्ति। तथा असंख्येषु पुरुषेषु केचित् ब्रह्मविदः यतयः ब्रह्मस्वरूपं परेभ्योऽपि प्रस्तनयन्ति। यत् यस्मात् कारणात् सिन्धुः ब्रह्मज्ञानस्यन्दनशीलः वृषभः सर्वश्रेष्ठः यतिः एव रोरुवत् अतिशयेन परमात्मशब्दम् उच्चारयन् एति संसारे जीवनयात्रां गच्छति ॥२॥

भूमिरिति = भूमिः = पृथ्वी, गन्धतन्मात्रश्च, आपः जलानि रसतन्मात्रश्च, अनलः अग्निः रूपतन्मात्रश्च, वायुः मरुत् स्पर्शतन्मात्रश्च। खम् आकाशः, शब्दतन्मात्रश्च। मनः संकल्पविकल्पौ। बुद्धिः सर्वसमष्टिः महत्तत्त्वम्। अहंकारः अहङ्कारवासना विशिष्टम् अव्यक्तम्। इतीयं प्रकृतिः सांख्यशास्त्रप्रोक्तं प्रधानम् अष्टधा अष्टप्रकारा भिन्ना मे मम परमात्मनः अस्ति॥ ४॥

(मू. गी.) भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ ४॥

(वेदगी.) अष्टजाता भूता प्रथमजर्तस्याष्टेन्द्रर्त्विजो दैव्या ये।
अष्टयोनिरदितिरष्टपुत्राष्टमीं रात्रिमभि हव्यमेति॥ २१
अथ. कां. ८ अनु. ५ सू. ९ मं. २१ यद्वा "अष्टधा युक्तो वहति वह्निरुग्रः पिता
देवानां जनिता मतीनां। ऋतस्य तन्तुं मनसा मिमानः" कां. १३ अनु. ३ सू. ३ मं. १९
सर्वा दिशः पवते मातरिश्वा

अष्टजातेति = हे इन्द्र! हे जीवात्मन्! ऋतस्य परब्रह्मणः मम प्रथमजा सृष्ट्यादौ जाता अष्ट अष्टसंख्यापरिमिता "भूमिजलाग्निवाय्वाकाशमनोबुद्ध्यहंकारात्मिका भूता भावरूपा प्रकृतिः जाता जगत्कारणस्वरूपा कार्यत्वेन प्रादुर्भूता। ये दैव्याः प्रकाशात्मिका ऋत्विजः जगन्मध्यगतसम्यादिकाः सन्ति। अष्टयोनिः अष्टानां पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहंकाराणां योनिः मूलकारणम् अदितिः खण्डैः रहिता नित्या इत्यर्थः। अष्टपुत्रा अष्टौ पृथिव्यादिस्थूलपदार्थाः पुत्राः पुत्ररूपा यस्या ईदृशी सा अष्टविधा प्रकृतिः अष्टमीं प्रकृत्याख्यां रात्रिं स्वलयस्थानं हव्यम् लयस्वरूपं भोजनम् अभ्येति अभिगच्छति॥ २२॥ अष्टधेति = उग्रः उग्रतत्त्वरूपः देवानाम् इन्द्रियाणां तद्द्वारा लोकपिता पालकः, मतीनां वृत्तीनां जनिता उत्पादकः वह्निः प्रपञ्चस्य वोढा ~~प्रकृतिः~~ अपरा प्रकृतिः मनसा सर्वेषां प्राणिनां संकल्पकल्पनया ऋतस्य जगद्यज्ञस्य तन्तुं विस्तारं मिमानः मानं कुर्वन् सन् युक्तः जगत्सञ्चालकर्मणि नियुक्तः अष्टधा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहंकारान् वहति धारयति प्रवाहयति वा॥ ३॥

^ अष्टधायुक्तः = भूमिजलाग्निवाय्वाकाशमनोबुद्ध्यहंकारैः अष्टविधा परप्रकृतिनाम्ना युक्तः वहति संसारं चालयति।

अपरेयमिति = भूमिजलाद्यष्टविधा प्रकृतिः या प्रोक्ता सा इयम् अपरानाम्ना उच्यते। इतः तु अपरानाम्न्याः प्रकृतेः अन्यां भिन्नां परां श्रेष्ठां जीवभूतां क्षेत्रज्ञरूपां मे ममेश्वरस्य प्रकृतिं विद्धि जानीहि। यया जीवरूपया परया प्रकृत्या इदं देहेन्द्रियादिरूपं जगत् "गच्छतीति जगत्" शरीरं धार्यते॥५॥

(मू॰ गी॰) अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥५॥

(वेद॰ गी॰) इयमेव सा या प्रथमा व्यौच्छदास्वितरासु चरति प्रविष्टा।
महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री॥४
अथ॰ कां॰ ३ अनु॰ २ सू॰ १० मं॰ ४

इयमेवेति = इयमेव अपरा भूम्याद्यष्टविधा प्रकृतिः। या प्रथमा सृष्ट्यादौ प्रथमस्वरूपम् आगता व्यौच्छत् सर्वत्र प्रासरत्। इतरासु इतरा = इत्यत्र प्रथमार्थे सप्तमी व्यत्ययः। इतरा जीवरूपा प्रकृतिः आसु अष्टविधप्रकृतिस्वरूपासु तनूषु प्रविष्टा अनुगता सती चरति वर्तते। अस्यां जीवभूतायां प्रकृतौ अन्तः मध्ये महान्तः मुख्याः महिमानः माहात्म्यविशेषाः वर्तन्ते इति शेषः। एषा एव जीवरूपा प्रकृतिः वधूः नवोढा स्त्रीव नित्यं नवा सती नवगात् नवं स्वकर्मभिः अभिनवं जन्म गच्छतीति नवगात् भूत्वा जनित्री स्वशुभाऽशुभकर्मणां जनयित्री सती जिगाय जयति सर्वोत्कर्षेण वर्तते अर्थात् जीवरूपा प्रकृतिः एव सर्वं जगन्मयं शरीरं धारयति॥४॥

एतदिति=एतत् परा ऽपराप्रकृतिद्वयं योनिः कारणं येषां तानि एतद्योनीनि भूतानि "भवन्ति जन्मना सत्तां भजन्तीति भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वाणि इत्युपधारय इति निश्चिनुहि। कृत्स्नस्य स्थूलसूक्ष्मकारणत्रितयस्य जगतः ब्रह्माण्डस्य अहमेव प्रभवः उत्पत्तिस्थानम् अस्मि यद्वा प्रभवत्यस्मादिति प्रभवः उपादान कारणम्। उपसर्गवशात् प्रलीयते निष्पाद्यते ऽनेनेति प्रलयः निमित्त कारणं एवमुभयमेव अहम् एकास्मीति बोध्यम्। ॥ ६ ॥

(भ. गी.) एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥
(वेदगी.) अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे।
ततो वितिष्ठे भुवनाऽनु विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि ॥ ७
ऋ. अष्ट. ८ अध्या. ७ व. १२ मं. ७ (मं. १० अनु. १० सू. १२५ मं. ७)
अथ. कां. ४ अनु. ६ सू. ३० मं. ७

अहमिति=अहं परमात्मा एव "पितरम्" "द्यौः पिता" तै. ब्रा. ३।७।५।५ इतिश्रुतेः "पिता द्यौः" पितरं दिवं सुवे प्रसुवे जनयामि आत्मनः आकाशः संभूतः" इतिश्रुतेः। अस्य मे मम परमात्मनः मूर्धन् मूर्धनि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव। यद्वा अस्य भूर्लोकस्य मूर्धन् मूर्धनि उपरि पितरम् आकाशम् सुवे जनयामि। समुद्रे अन्तरिक्षे अप्सु अम्मयेषु ~~प्राणिषु~~ जलीयप्राणिषु जलीयपदार्थेषु च अन्तः मध्ये ~~मे~~ मम योनिः कारणभूतं ब्रह्म चैतन्यं वर्तते। यद्वा समुद्रे जलधौ अप्सु उदकेषु अन्तः मध्ये वाडववैघुतरूपेण यत् तेजो वर्तते। तदेव मम योनिः कारणरूपं ब्रह्म चैतन्यं वर्तते। ततः तस्मात्हेतोः विश्वा=विश्वानि सर्वाणि भुवनानि भूतजातानि अनुप्रविश्य वितिष्ठे विविधं व्याप्य तिष्ठामि। उत अपि च अमूं द्यां विप्रकृष्टां दिवम् उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं ब्रह्माण्डं अध्यस्तं विकारजातं वर्ष्मणा कारणभूतेन विराट्स्वरूपेण देहेन उपस्पृशामि। सुवे=षूङ् प्राणिगर्भविमोचने। अदादित्वात् शपो लुक्। वितिष्ठे="समवप्रविभ्यः स्थः" इत्यात्मनेपदम् ॥ ७ ॥

मत्तः इति = हे धनञ्जय! हे अर्जुन! मत्तः परमेश्वरात् परतरम् अत्युत्कृष्टम् अन्यत्कारणं किञ्चिदपि नास्ति न वर्तते। सूत्रे गुणे मणिगणा इव मणिसमूह इव मयि कारणभूते सर्वोऽधिष्ठाने परे ब्रह्मणि इदं परिदृश्यमानं चराचरात्मकं सर्वं जगत् प्रोतम् अनुगतं भवति ॥८॥

(मू. गी.) मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥८॥

(वेद गी.) वेदाहं सूत्रं विततं यस्मिन्नोताः प्रजा इमाः। सूत्रं सूत्रस्याहं वेदाथो
यद् ब्राह्मणं महत्॥ अथ. कां. १. अनु. ४ सू. ८ मं. ३८ यद्वा
"दृढो दृंह स्थिरो न्यो ब्रह्म विश्वसृजो दश। नाभिमिव सर्वतं
श्चक्रमुच्छिष्टे देवताः श्रिताः॥ अथ. कां. ११ अनु. ४ सू. ९ मं. ४ (यद्वा)
तस्माद् वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते। सर्वा ह्यस्मिन् देवता
गावो गोष्ठ इवासते॥ अथ. कां. ११ अनु. ४ सू. ८ मं. ३२ यद्वा "विश्वमन्यामभिवार तदन्यस्यामधिश्रितम्॥" ऋ. २।१६।१२ (?)

वेदाहमिति = अहं मुमुक्षुः ब्रह्मवित् सूत्रं "सूत्रयतीति सर्वं जगत् स्वात्मना वेष्टयतीति सूत्रं परं ब्रह्म, तदेव विततं विशेषेण सर्वत्र विस्तृतं वेद जानामि यस्मिन् परे ब्रह्मणि इमाः सर्वाः प्रजाः प्रकर्षेण जायन्ते इति प्रजाः सर्वे पदार्थाः ओताः सूत्रे मणिगणा इव अन्तर्व्याप्ताः सन्ति। अहं सूत्रस्य परब्रह्मणः सूत्रं सूक्ष्मत्वं वेद जानामि। अथो अपि च यद् महत् सर्वतोऽधिकमहत्त्ववत् ब्राह्मणं सर्वत्र बृंहणशीलम् अस्ति ॥३८॥ यद्वा दृढ इति = विश्वसृजः = विश्वं सृजतीति विश्वसट् तस्य विश्वसृजः परमात्मनः दशस्य दशदिक्षु दृंह स्थिरः दृढत्वेन स्थिरतरः ब्रह्म सर्वत्र ओतत्व प्रोतत्वे दृढः स्थिरः अस्ति। सर्वा देवताः "पृथिव्यादि सर्वे पदार्थाः नाभौ चक्रमिव यद्वा नाभौ नाडीव उच्छिष्टे शेषस्वरूपे परब्रह्मणि आश्रिताः सन्ति ॥४॥ (यद्वा) अस्मिन् परब्रह्मणि सर्वा देवताः सर्वे पदार्थाः गोष्ठे गाव इव गवां स्थाने धेनव इव आसते विराजते। तस्मात् कारणात् विद्वान् ज्ञानी इदं पुरुषं जीवात्मानं ब्रह्म ओतप्रोतत्वेन सर्वत्र व्यापकं परंब्रह्म मन्यते जानाति ॥४॥

रस इति = हे कौन्तेय! हे अर्जुन! अहं परमात्मा रसः अस्मि रसरूपेण तिष्ठामि। यथा शशिसूर्ययोः रवीन्द्वोः प्रभाऽस्मि प्रकाशरूपोऽस्मि। सर्ववेदेषु
ऋगादिषु चतुर्षु वेदेषु प्रणवः ओंकाररूपेण तिष्ठामि। खे आकाशे शब्दः शब्दस्वरूपोऽस्मि। नृषु पुरुषेषु पौरुषं पुरुषभावः तिष्ठामि ८

(मू. गी.) रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

(वेद गी.) आदित् पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्
मासाम्। मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णाः
अतृपं यदा वः। अथ. कां. २ अनु. ३ सू. १३ मं. ६

आदिदिति = हे जीवात्मन्! आत् इत् स्वकीयानन्तरं यदेवाऽस्ति। तदेव स्वभया प्रभासमानं स्वमेव पश्यामि अतः शशिसूर्यादिप्रभा
मद्विभूतिरेव। उत वा अपि च शृणोमि घोषः शब्दः मा माम् आगच्छति आयाति अर्थात् आकाशस्य विशेषगुणः शब्दोऽपि
पि मद्विभूतिरेवाऽस्ति। तथा वाक् वागिन्द्रियं तद्गुणश्च रसः आसां रसाऽधिष्ठानानां गुणः मा माम् आगच्छति अर्थात्
रसोऽपि मत्स्वरूप एवाऽस्ति "रसो वै सः" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्युपनिषद्। यदा
यस्मिन् काले अमृतस्य अमृतमयस्य ओंस्वरूपस्य भेजानः भजन् जीवात्मा मुक्तो भवति इति मन्ये इति तर्कयामि।
"अमृतस्य" इत्यत्र "पूर्ववत् कर्मणः" सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी। हे हिरण्यवर्णाः = हिरण्यमयः विज्ञानमयः
वर्णः स्वरूपं येषां ते हिरण्यवर्णाः विज्ञानस्वरूपाः!!! हितरमणस्वभावाः मुमुक्षवः!!! तर्हि तदानीं वः युष्माकम् ओंस्वरूप
स्यावलोकेन अतृपम् तृप्तो भवामि तृप्तो भवामीत्यर्थः। भेजानः इति = भजेश्छान्दसे लिटि "तृफलभजत्रपश्च" इत्येत्वाऽ
भ्यासलोपौ। अतृपम् इति 'तृप तृम्फ तृप्तौ'। तौदादिकः लुङि उत्तमैकवचने रूपम् ॥ ६ ॥

पुण्य इति= पृथिव्यौ भूमौ पुण्यः पवित्रः गन्धोऽहमस्मि। विभावसौ अग्नौ अहं तेजः तेजोमयोऽस्मि। सर्वभूतेषु सर्वप्राणिषु जीवनं जीवनाधारः प्राणः अस्मि। तपस्विषु कृच्छ्रचान्द्रायणादि व्रतानितापादि कर्तृषु तपस्विजनेषु तपोरूपेण तिष्ठामि ॥ ९ ॥

(मू० गी०) पुण्यो गंधः पृथिव्यां च तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥
(वेद गी०) "तं पुण्यं गन्धं गन्धर्वाप्सरस उपजीवन्ति पुण्यगन्धि
रुपजीवनीयो भवति य एवं वेद" अथ० कां० ८ अनु० ५ सू० १० मं० ८
"तेजोऽसि तेजो मयि धेहि" यजुः १९।९ "प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते। प्राणो ह सत्यवादिनमुत्तमे लोके आदधत्" अथ० ११।४।११
"नमस्ते प्राण प्राणते नमो अस्त्वपानते। पराचीनाय ते नमः प्रतीचीनाय ते नमः सर्वस्मै त इदं नमः। अथ० कां० ११ अनु० २ सू० ६ मं० ८ "प्राणाद्वायुरजायत" ऋ० १०।९०।१३ प्राणो वै वायुः, श० ३-२।१।१२
आयुरस्यायुर्मे दाः स्वाहा अथ० कां० २ सू० १७ मं० ४
हे परमात्मन्! आयुः असि= त्वम् आयुः जीवनमसि आयुर्जीवनं मे मह्यं दाः देहि
तद्बृहस्पते तपश्च ऋषयः उपजीवन्ति" अथ० कां० ८ अ० ५ सू० १० मं० १९
पुण्य इति= गन्धर्वाप्सरसः गो वाचं धारयति वशीकुरुते इति गन्धर्वः वाङ्नियन्ता, यद्वा गवाम् इन्द्रियाणां धर्ता इन्द्रियवशीकर्ता। अप्सरसः= आप इत्यन्तरिक्षनाम, अप्सु हृदयाकाशे सरतीति अप्सराः हृदयगन्ता, यद्वा अप्स इति रूप नाम। रोमलचीय अप्सराः रूपवान् ब्रह्मरूपदर्शकः। यद्वा अप्स प्रति नित्यं सरतीति अप्सराः ब्रह्मऽभिगन्ता इत्यत्र अप् शब्दोपपादात् सर्तेः असुन् प्रत्ययः। अप्सु शब्दोपपादात् ला आदाने इत्यस्माद् वा रले असुन्ता दाने इत्यस्माद्वा असुन् तथा च यास्केनोक्तम्। "अप्सरा अप्सारिण्यपि वा अप्स इति रूपनाम अप्सातेरप्सानीयं भवति आदर्शनीयं व्यापनीयं वा तद्वा भवति रूपवती तद् अनायत्तमिति वा तद् अस्यै दत्तम् इति" च नि० ५।१३ गन्धर्वाश्च अप्सरसश्च गन्धर्वाप्सरसः। इन्द्रियनियन्तृ ब्रह्मविदः तं पुण्यं पवित्रं गन्धं मां पृथिवीं धरतीति गन्धः ते गंधं पृथिवीसमवेतं विशेषगुणं परमात्मविभूतिं उपजीवन्ति स्वोपजीवनं विदधति पुण्यगन्धिः शुद्धं ब्रह्मस्वरूपम् उपजीवनीयः शरण्यः भवति गन्धोऽपि ब्रह्मविभूतिरस्ति इति यः जीवात्मा वेद जानाति।

स एव मेधो ब्रह्मविभूतिः८ तेज इति। हे परमात्मान् त्वं तेजोऽसि अतः तेजः स्वविभूतिं मयि भक्ते धेहि धारणां कुरु ॥ ९ ॥
नमस्ते इति = हे प्राण! प्रकर्षेण अनिति सर्वप्राणिशरीरं व्याप्य चेष्टते इति प्राणः समष्टिशरीराऽभिमानी प्रथमस्रष्टः हिरण्यगर्भः। तत्स्वरूपो हे प्राण! हे सर्वभूतजीवन! प्राणते प्राणनव्यापारं कुर्वते ते तुभ्यं नमः अस्तु। तथा अपानते अपाननव्यापारं कुर्वते अपानवृत्त्यात्मकाय तुभ्यं नमोऽस्तु। तथा पराङ्चीनाय पराङ्गनाय परागमनस्वभावाय देहाद्बहिः स्वस्थिताय ते तुभ्यं नमोऽस्तु। तथा प्रतीचीनाय प्रतिमुखम् अञ्चते देहमध्ये वर्तमानाय तुभ्यं नमोऽस्तु। सर्वस्मै सर्वव्यापारकर्त्रे सर्वप्राणिशरीरान्तर्वर्तिने ते तुभ्यं इदं नमः अयं नमस्कारो भवतु ॥ ८

तद्ब्रह्मेति = सप्तऋषयः सृष्ट्यादौ उत्पन्नाः "अत्रिर्भृगुर्वसिष्ठ—प्रभृतयः अतीन्द्रियार्थद्रष्टारो वा ब्रह्मवेत्तारः परमात्मानं तद्ब्रह्म तपः तपःस्वरूपं ~~ब्रह्म~~ ~~परमात्मानमेव~~ उपजीवन्ति स्वोपजीवनं विदधति। ~~य~~ यः ब्रह्मवेत्ता (एवम् इत्थं वेद जानाति। स ब्रह्मवेत्ता ब्रह्मवर्चसी ब्रह्मज्ञानयुक्तः सन् उपजीवनीयः स्वजीवननिर्वाहकः भवति ॥

बीजमिति=हे पार्थ! हे पृथायाः पुत्र! हे अर्जुन! सनातनं सदातनं सर्वेभ्यः प्राक्तनं मां परमेश्वरं सर्वभूतानां सर्वेषाम् आकाशादीनां भूतानां बीजं मूलकारणं विद्धि जानीहि। तथा बुद्धिमताम् आत्मानात्मविवेकिनां बुद्धिः प्रज्ञा अहमेवाऽस्मि। तथा तेजस्विनां परैः अप्रधृष्यानाम् तेजः अभिभावकं तेजोरूपं कारणम् अहम् अस्मि ।१०॥

(मू.गी.) बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।
बुद्धिर्बुद्धिमतामस्मि तेजः तेजस्विनामहम् ॥१०॥

(वेदगी.) अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एना पृथिव्यैतावती महिना संबभूव ॥ अथ. कां. ४ अनु. ६ (महिम्ना) अथ.
सू. ३. मं. ८ यद्वा ऋ. अष्ट. ८ अध्या. ७ व. १२ मं. ८ (मं. १० अनु. १० सू. १२५ मं. ८) अथ. कां. ४ सू. ३० मं. ८
मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतरं मतिम्।
त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥३॥
साम. उत्त. ३ प्र. २ अर्द्धः। ऋ. अष्ट. ८ अध्या. ४ व. २१ मं. ८

अहमिति=अहं परमात्मा एव विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा बीजरूपेण अहमेव परमात्मा उत्पादयन् अन्यसहाय एव प्रवामि प्रवर्ते। तत्र दृष्टान्तः वात इव=वातः वायुः परेण अप्रेरितः सन् स्वेच्छयैव प्रवाति। तद्वदहमेव स्वेच्छया बीजरूपत्वात् प्रवामि। परो दिवा=परस् सकारान्तः शब्दः अधः अधस्तात् इतिशब्दवत् परः परस्तात् इत्यर्थो भवति। अधस्तात् इव परस्तात् शब्दयोगे तृतीया। दिवा आकाशाद्य परस्तात्। एना पृथिव्या "द्वितीया टौस्वेनः" इति इदम अनादेशः "सुपां सुलुक—" अस्याः पृथिव्याः परः परस्तात् द्यावापृथिव्योरुपादानम् उपलक्षणम्। एतदुपलक्षितात् सर्वस्मात् विकारजातात् परस्तात् वर्तमानोऽहं चैतन्यरूपं ब्रह्म महिना महिम्ना माहात्म्येन एतावती एतावान् महान् बीजरूपोऽस्मि। आरभमाणा, एतावती, लिङ्गव्यत्ययः। एतावते एतच्छन्दात् "यत्तदेतेभ्यः—" इति वतुप्। "आ सर्वनाम्नः" इत्यात्वम्॥ मेधाकारमिति। मेधाकारं बुद्धिस्वरूपं यद्वा मेधायाः प्रज्ञायाः कर्तारं विदथस्य

बलमिति = हे भरतर्षभ! हे अर्जुन! बलवतां बलशालिनां देहिनां कामरागविवर्जितं कामः अभिलाषा रागः अप्राप्तपदार्थे प्राप्तीच्छा, ताभ्यां विवर्जितं रहितं बलं च अपि अहम् अस्मि। भूतेषु सर्वेषु प्राणिषु धर्माविरुद्धः वर्णाश्रमधर्माऽविरुद्धः कामः अहमेवाऽस्मि। तेषु सर्वेषु कामात्मनाऽहं प्रविष्टोऽस्मि ॥ ११

(मू. गी.) बलं बलवतां चाहं कामरागविवर्जितम्।
धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११॥

(वेद गी.) बलमसि बलं मे दाः स्वाहा। अथ. कां. २ अनु. ४ सू. ११ मं. ४
कामस्तदग्रे समवर्तत मनसो रेतः प्रथमं यदासीत्।
स काम कामेन बृहता सयोनी रायस्पोषं[१] यजमानाय धेहि ॥ १
अथ. कां. १९ अनु. ६ सू. ५२ मं. १ यद्वा "यो देवो विश्वाद् यमु काममाहुः यं दातारं प्रतिगृह्णन्तमाहुः"

[१] अतिशयेन पोषणम्

विदथानि वेदनानि "विदथानि प्रचोदयन्" इत्यपि निगमो भवति निरु. ६।७ विदथस्य ज्ञानस्य ब्रह्मयज्ञस्य वा प्रसाधनं प्रकर्षेण साधकम्। होतारं अथ. कां. ३
ज्ञानस्य दातारम् अभिभवितारम् मतिम् मनसः प्रेरयितारम्। महः तेजः स्वरूपं त्वाम् अग्निम् परमात्मानमेव सर्वे मुमुक्षवः समानमित् सू. २१ मं. ४
सहैव मिलित्वैव अर्भस्य अल्पस्य हविषः ज्ञानमयस्य हविषः भक्षणाय वृणते प्रार्थयन्ते। त्वत् = त्वत्तः अन्यम् अतिरिक्तं कमपि देवं न वृणते
न प्रार्थयन्ति ॥ ८ ॥ बलमिति = हे परमात्मन्! त्वं बलमसि देहशक्तिरसि। अतः मे मह्यं बलं शक्तिं दाः देहि स्वाहा सु सम्यक्तया कथयति प्रार्थयिता।
यथा च यास्क आह "स्वाहा" इत्येतत् सु आहेति वा स्वा वाग् आहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति निरु. ८।२०।
काम इति = प्रलयकाले सर्वेषु जगत्सु वासनाशेषेण मायायां विलीनेषु पुनः ईश्वरस्य पर्यालोचितं जगतः पुनरुत्पत्तौ कारणं काम इच्छैव
सृष्टेः प्राक् ~~[illegible]~~ परमेश्वरः, परमेश्वरे तस्मिन् वा समवर्तत सम्यक्तया विद्यते। मनसः सर्वप्राण्यन्तःकरणस्य रेतः
भाविनः प्रपञ्चस्य रेतः बीजभूतं प्रथमं प्राक्कल्पिकं कृतं पुण्याऽपुण्यात्मकं कर्म यत् आसीत् अभवत्। तत् तस्माद्धेतोः परमात्मनः
मनसि सिसृक्षा जायतेऽतः कामोऽपीश्वरविभूतिरेवाऽस्ति। हे काम! हे कामस्वरूपपरमात्मन्! स त्वं परमात्मा बृहता महता धर्मा-
विरुद्धेन कामेन अभिलाषेण सयोनिः समानकारणः परमेश्वराऽव्यतिरिक्तस्वरूपः सन् यजमानाय परमेश्वरपूजकाय
पुरुषाय रायः ज्ञानसाधनस्य पोषं पुष्टिं समृद्धिं धेहि स्थापय प्रयच्छेति भावः ॥ १ ॥ य इति यः देवः ज्योतिःस्वरूपः परमात्मा
~~विश्वाट् विश्वसंहर्ताऽस्ति यं दातारं कर्मफलप्रदातारं यं प्रतिगृह्णन्तं स्वस्मिन् लयकर्तारमाहुः~~ कथयन्ति। यमु =
यं परमात्मानम् एव कामम् आहुः कथयन्ति ॥ ४

ये इति= ये सात्विकाः सत्वगुणविशिष्टाः भावाः देवर्षिब्राह्मणादयः पदार्थाः सन्ति। ये च राजसाः रजोगुणविशिष्टा भावाः क्षत्रियादिकाः पदार्थाः सन्ति। ये च तामसाः तमोगुणविशिष्टा भावाः राक्षसादिमुख्याः पदार्थाः सन्ति। तान् एतान् सर्वान् मत्तः मत् परमात्मनः जातान् विद्धि जानीहि। तदेतत्सर्वं प्रत्यक्षमात्रं कार्यजातं मत्त उत्पन्नमितिभावः। अहं सर्वव्यापकत्वाद् परिच्छिन्नः तु तेषु परिच्छिन्नेषु पदार्थेषु नाऽस्मि, यतस्ते अधिकरणस्वरूपाः भवितुं नार्हन्ति। ते सर्वे कार्यस्वरूपाः पदार्थाः परिच्छिन्नाः सन्तः मयि अपरिच्छिन्ने सर्वोऽधिकरणे मयि वर्तन्ते॥१२॥

(मू॰गी॰) ये चैव सात्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि॥१२॥
(वेदगी॰) त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोमधामभिः।
अग्ने दक्षैः पुनीहि नः॥ ऋ॰ अष्ट॰ ७ अ॰ २ व॰ १८ मं॰ २६
मं॰ ९ सू॰ ६७ मं॰ २६

त्रिभिरिति= हे देव! हे द्योतनात्मकज्योतिःस्वरूपपरमात्मन्! हे सवितः! हे जगदुत्पादक परमात्मन्! हे अग्ने! हे सर्वव्यापक! हे सोम! हे सौम्यरसात्मक! त्वं त्रिगुणाधिपतिः वर्षिष्ठैः श्रेष्ठैः वृद्धतमैः वा दक्षैः निजगुणप्रत्यक्षीकरणे सामर्थ्यवद्भिः त्रिभिः सत्वरजस्तमोगुणैः त्रिसंख्याकैः धामभिः संसारप्रवृत्त्याधारैः नः अस्मान् स्वविभूत्युपासकान् भक्तान् पुनीहि परिशुद्धान् कुरु अर्थात् वयं त्रिभिर्गुणैः बद्धाः न भवेम॥२६॥ तथा च मुण्डोप॰ मुं॰ २ खं॰ १ श्रु॰ १ "ओं तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवाऽपि यन्ति।

त्रिभिरिति= गुणमयैः सत्त्वादिगुणमयैः त्रिभिः त्रिप्रकारकैः सात्विकैः राजसैः तामसैः भावैः भोग्यपदार्थैः एभिः अनुभूयमानैः शब्दादिविषयैः तज्जन्यैः रागद्वेषादिभिश्च इदं सर्वं जगत् मोहितं ज्ञानाज्ञानविचारविरहितम् एभ्यः सत्त्वादिगुणेभ्यः तत्कार्येभ्यश्च परं भिन्नम् अव्ययम् विकाररहितं मां परमात्मानं न अभिजानाति न वेत्ति ॥१३॥

(मू. गी.) त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाऽभिजानाति मामेभ्यः परमव्ययम् ॥१३॥

(वेद. गी.) नकी रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः।
यदा कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥२॥
साम. उत. १२ शाध्या. खं. १। अथ. कां. २०; अनु. १ सू. १४ मं. २
ऋ. अष्ट. ६ अध्या. २ व. ४ मं. १४ यद्वा "ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः। वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे," अथ. कां. १ सू. १ मं. १

नकीरिति= हे परमात्मन्! रेवन्तं ~~सौभाग्यवन्तं~~ धनवन्तं त्वं रजोगुणमोहितं जनं सख्याय सविभावाय मुक्तये नकिः विन्दसे न भजसे नाश्रयसीत्यर्थः। राजसः जनः त्वां न अभिजानातीतिभावः। सुराश्वः "टुओश्वि गतिवृद्ध्योः। सुरया तमोगुणप्रधानेन मादकद्रव्येण प्रवृद्धाः प्रमत्ताः तामसाः जनाः ते त्वां परमात्मानं पीयन्ति हिंसन्ति त्वां नाश्रयन्ति। "पीयतिः हिंसाकर्मा। यदा यस्मिन् काले रजोगुणादिभिः मोहिताः न भवन्ति। तदा त्वं रजोगुणसत्त्वगुणतमोगुणैः त्रिभिः अमोहितं जनं नदनुं= "नद अव्यक्ते शब्दे। नदनुं स्तोतारं कृणोषि कुरुषे ॥ मदीयोऽयं जनः इति यदा त्वं भावयसि तदानीं तम् एव समूहयसि स्वात्मना सह योजयसि। आदित्= अनन्तरमेव त्वं पिता इव पालयिता इव रागद्वेषादिशून्यैः स्वभक्तैः आहूयसे स्तुतिभिः आकार्यसे ॥ ७८५

विश्वानि सर्वाणि रूपाणि पदार्थानां स्वरूपाणि बिभ्रतः धारयन्तः त्रि-सप्ताः त्रिभिः गुणैः सप्ताः सप्तविधाः ३×७ पदार्थाः परियन्ति सर्वत्र व्याप्नुवन्ति। वाचस्पतिः परमात्मा गुरुर्वा तेषां "बलानि" मे मम तन्वः शरीरस्य मध्ये दधातु धारयतु,,
एकविंशति पदार्थानां
यथाशक्ति मन्ति

दैवीति = दैवी स्वयमेव दीव्यति प्रकाशते इति देवः परमात्मा देवस्येदं दैवं स्त्री चेत् दैवी। यद्वा देवैस्तिष्ठतीति दैवी गुणमयी गुणत्रयवती एषा मम परमात्मनः माया गुणमयी शक्तिः सा एषा दुरत्यया दुःखेन अत्येतुं शक्याऽस्ति। ये यतयः निष्कामसेवया मामेव परमात्मानमेव प्रपद्यन्ते शरणं प्राप्नुवन्ति। ते निष्कामतया ईश्वरार्पणबुद्ध्या सुकृत्यैः शुद्धान्तःकरणाः सन्तः एताम् आवरणविक्षेपात्मिकां गुणत्रयात्मिकां मायां तत्कार्यञ्च तरन्ति पारं यान्ति ॥ १४ ॥

(मू. गी.) दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

(वेदगी.) सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्।
दैवीं नावं स्वरित्रामनागसो अस्रवन्तीमा रुहेमा स्वस्तये ॥ १ ॥
अथ. कां. ७ अनु. १ सू. ७ मं. १

"माश्च मोहार्थवचनो याश्च प्रापणवाचकः। तं प्रापयति यानित्यं सा माया परिकीर्तिता" ब्रह्मवैवर्त पु. कृष्णजन्मखं.

सुत्रामाणमिति = हे परमात्मन्! वयं यतयः सुत्रामाणं सुकु स्वगुणैः स्वस्वविषयं त्रायमाणां पृथिवीं सर्वत्र पदार्थमात्रे विस्तीर्णाम्। सुप्रणीतिं सुखेन कर्मणां प्रणेत्री स्वरित्रां सुष्ठु दण्डनीयां नावं नौसदृशीं पारकर्त्रीं दैवीं देवसम्बन्धिनीं मायां "नौः प्रणेतव्या भवति नमतेर्वा नि. ५।२३" नद प्रेरणार्थाम्। आरुहेम आरूढा भूयास्म। तदुपरि आरुह्य संसारार्णव पारं गच्छामेति भावः। अथ च अनागसः पापादिदोषैः रहिताः वयं दैवीमायातरणानन्तरं सुशर्माणं शोभनसुखयुक्ताम् अदितिम् अखण्डनीयाम् अस्रवन्तीम् अविनश्वरीं द्यां द्योतमानाम् अभिगन्तव्यां मत्संस्थितिं स्वस्तये क्षेमाय अविनाशाय च आरुहेम आरूढा भूयास्मेति। सुत्रामाणम् = सूपसर्गपूर्वकत्रै रक्षणे "आतो मनिन् क्वनिब्वनिपश्च" इति मनिन् प्रत्ययः। आरुहेम = रोहतेः लिङि "लिङ्याशिष्यङ्" प्रत्ययश्च "अन्येषामपि दृश्यते" इति संहिति को दीर्घः। पृथिवीम् = प्रथेः षिवन् सम्प्रसारणञ्च उणादि (१।१४८) इति प्रत्ययसंप्रसारणे। षित्वात् ङीष्। दैवीम् = "देवाद् यञञौ" इति अञ्प्रत्ययः। १ ॥ देवी भाग. अध्या. ४५ "विचित्रकार्यकरणा अचिन्तितफलप्रदा। स्वप्नेन्द्रजालवल्लोके माया तेन प्रकीर्तिता"

न मां प्रपद्यन्त इति = दुष्कृतिनः दुष्टा कृतिः कर्म येषां ते दुष्कृतिनः अशुभकर्मकर्तारः मायया सकामकर्मरूपेण अज्ञानेन अपहृतं विनष्टं ज्ञानं येषां ते अपहृतज्ञानाः सदसद्विवेकशून्याः अत एव आसुरम् असुरसम्बन्धिनं भावम् आशयम् आश्रिताः प्राप्ताः सन्तः मूढाः मोहंगताः नराधमाः नरेषु अधमाः नराधमाः नीचतराः पापाः पुरुषाः मां परमात्मानं न प्रपद्यन्ते न प्राप्नुवन्ति ॥ १५ ॥

(मू० गी०) न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

(वेद०) परा॑च ए॒नान् प्र णु॑द॒ कण्वा॑न् जीवित॒योप॑नान्।
तमां॑सि॒ यत्र॒ गच्छ॑न्ति॒ तत् क्र॒व्यादो॑ अजीगमम् ॥ ५ ॥ अथ० कां० २ सू० २५ मं० ५

पराच इति = हे जीवात्मन्! हे मुमुक्षो! ~~[illegible]~~ पराचः परमात्मध्यानपराङ्मुखान् कर्मवृन्दान् प्रत्यगात्मतत्त्वभिज्ञान् जीवितयोपनान् = जीवितस्य जीवनस्य मोहकान् "युप रुप लुप विमोहने" "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट्। एनान् ज्ञानविमुखकरान् आसुरीभावान् कण्वान् पापानि "कणतिः शब्दार्थः।" "अशू प्रुषि लटि कणि खटि विशिभ्यः क्वन्" उणा० (१।१४९) इति क्वन् प्रत्ययः। प्रणुद अपसारय। तमांसि मूढाः कार्याकार्यविवेकशून्याः पुरुषाः (तम धातोः असुन् प्रत्ययः) यत्र यं प्रदेशं मुक्तिधामतः दूरतरं लोकं गच्छन्ति। तत् तथाविधं निष्प्रकाशं स्थानं क्रव्यादः = क्रव्यं मांसम् अत्तीति क्रव्यात् असुरः "क्रव्ये च" इति अदेर्विट् प्रत्ययः। क्रव्यादः मांसभक्षान् तान् असुरान् नराधमान् अजीगमम् प्रापयामि। अतः मूढाः नराधमाः मां न प्रपद्यन्ते इति ॥

चतुर्विधा इति = हे अर्जुन! हे भरतर्षभ! हे भरतश्रेष्ठ! आर्तः आध्यात्मिकाद्युपद्रवपीड़ितः, जिज्ञासुः आत्मानात्मविवेकतत्त्वं ज्ञातुम् इच्छुः।
अर्थार्थी = कस्यचित्सुखस्य इच्छुकः। ज्ञानी सदसद्वस्तुविवेकपूर्वकं ब्रह्मपदप्राप्त्यभिलाषी, इति चतुर्विधाः चतुष्प्रकाराः सुकृतिनः
पुण्यात्मानः जनाः लोकाः मां परमात्मानं सेवन्ते इति ॥ १६ ॥

(मू.गी.) चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

(वेदगी.) चत्वार ईं बिभ्रति क्षेमयन्तो दशगर्भं चरसे धापयन्ते।
त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान्॥
ऋ. अष्ट. ४ अध्या. ३ व. १ मं. ४ (मं. ५ अनु. ४ सू. ४७) यद्वा
"मां चत्वार आशवः शविष्ठस्य द्रवित्नवः। सुरथासो अभि प्रयो
वक्षन्वयो न तुग्र्यम्॥" ऋ. अष्ट. ६ अध्या. ५ व. २४ मं. २ मं. ८ अनु. ८ सू. ७४ मं. १४

चत्वार इति = चत्वारः आर्तः १ जिज्ञासुः २ अर्थार्थी ३ ज्ञानी ४ इति चतुर्विधा जना ईम् एनं परमात्मानं क्षेमयन्तः आत्मनः कल्याणम् इच्छन्तः बिभ्रति
धारयन्ति भजन्ते इति भावः। दश दिशः सर्वतः गर्भं गर्भवन्मध्ये व्याप्नुवन्तम् एनं परमात्मानं चरसे प्राप्तये धापयन्ते गच्छन्ति। अस्य परमात्मनः
त्रिधातवः भूतभविष्यद्वर्तमानकालत्रये धारणशीलाः यद्वा त्रयः ~~ऋग्यजुःसामानि~~ धातवः जगद्धारकाः मंत्राः यस्मिन् स त्रिधातुः ते त्रिधा-
तवः ऋग्यजुःसाममंत्राः परमा अत्युत्कृष्टाः दिवः प्रकाशस्वरूपाः गावः ज्ञानमय्यः वाचः अन्तान् परि शरीरपरित्यागोत्तरं परितः सद्यः
तत्कालमेव चरन्ति गच्छन्ति ॥ ४ ॥ (यद्वा) हे जीवात्मन्! आशवः = दुःखनिवृत्तये शीघ्रगन्तारः आर्ता इत्यर्थः १ शविष्ठस्य अतिशयेन बलवतः प्र-
योजनस्य द्रवित्नवः द्रावकाः अर्थार्थिनः इति भावः २ सुरथासः सुष्ठु रथः शरीरं येषां ते सुरथासः जिज्ञासवः ३ प्रयः = प्रकृष्टेन इ ज्ञानकामः
यस्य स प्रे, ते प्रयः ज्ञानिनः ४ इत्येवंरूपाः चत्वारः चतुर्विधाः मां परमात्मानम् अभिवक्षन् अभिवहन्ति धारयन्ति। वयो न तुग्र्यम्, वयः
विहगाः तुग्र्यम् न जलराशिमिव प्राप्तुमिच्छन्ति। एवं चतुर्विधाः पुरुषाः अपि मां प्राप्तुम् इच्छन्ति ॥ २ ॥

तेषामिति = तेषां चतुर्विधानां सुकृतिनां भक्तानां मध्ये ज्ञानी नित्ययुक्तः नित्यं सर्वदा युक्तः परमात्मनः योगेन युक्तः सन् एकभक्तिः एकस्मिन् परमात्मनि भक्तिः अनुरक्तिः यस्य सः एकभक्तिः ज्ञानी विशिष्यते विशिष्टो भवति। ज्ञानिनः ब्रह्मज्ञानवतः अहं परमात्मा अत्यर्थं अत्यन्तं प्रियः प्रेष्ठः अस्मि। स च ज्ञानी एव मम परमेश्वरस्य प्रियः प्रेष्ठः अस्ति ॥१७॥

(मू० गी०) तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥

(वेदगी०) सत्यमित्था महे नदि परुष्ण्यव देदिशम्।
नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः ॥
ऋ० अष्ट० ६ अध्या० ५ व० २३ मं० ५ (मं० ८ अनु० ८ सू० ७४ मं० १५)

स्वरूपं महेनदि आनन्दघनस्वरूपः परुष्णि ज्ञानस्वरूप परमात्माऽहं
सत्यमिति = हे मुमुक्षो! जीवात्मन्! सत्यमित्थ "सत्यं ब्रह्म" ब्रह्मैवाहं त्वा त्वां मुमुक्षुम् अवदेदिशम् आदिशामि वदामि। महेनदि महे सततानन्दजनकव्यापारे ब्रह्मतेजसि वा नन्दतीति महेनदि ब्रह्मानन्दभुक् परुष्णि भास्वता ज्ञानेन प्रकाशमानः मर्त्यः मनुष्यः। ईम = अस्मात् शविष्ठात् अतिशयेन ~~मतिमतः~~ बलवतः आतीदितः आपः ब्रह्मणः व्याप्तिं जानन् यद्वा अप आनन्दः अपमे आनन्दे वेत्तीति आपः आनन्दवेत्ता ब्रह्मज्ञानी अस्ति ॥१५॥ अश्वदातरः संसारत्यागिनः पुरुषात् (न अस्ति) प्रियः नास्ति ——

उदारा इति = एते आर्तादयः सर्वे चत्वार एव उदाराः श्रेष्ठा एव सन्ति, यतः सर्वे मां भजन्ति। सर्वे तु मे मम आत्मा एव। हि यस्मात् कारणात् स ज्ञानी युक्तात्मा युक्तः परमेश्वरे ऽभिनिविष्टः आत्मा मनो यस्य स युक्तात्मा, अनुत्तमां सर्वोत्कृष्टां गतिं मां परमात्मानम् आस्थितः आसमन्तात् तिष्ठति ॥ १८ ॥

(मू. गी.) उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥

(वेदगी.) एते शमीभिः सुशमी अभूवन् ये हिन्विरे तन्वः सोम उक्थैः।
नृवद्वदन्नुप नो माहि वाजान् दिवि श्रवो दधिषे नाम वीरः ॥ १२
ऋ. अष्ट. ७ अध्या. ७ व. २१ मं. १४ (मं. ३. १ अनु. २ सू. २८ मं. १२)

एते इति = ये आर्ताः, जिज्ञासुः, अर्थार्थी, ज्ञानी इत्येवं स्वरूपाः ये ब्रह्मानन्दाऽभिलाषिणः भक्ताः जनाः तन्वः स्वशरीराणि शरीरस्थेन्द्रियाणि च सोमे परमात्मनि उक्थैः स्तुतिवचनैः हिन्विरे वर्धयन्ति अर्पयन्ति वा। ते एते आर्तार्थार्थिजिज्ञासुज्ञानिनः शमीभिः स्वस्वकृतस्तवनकर्मभिः सुशमी सुकर्माणः "सुशमीत्यत्र बहुवचन स्थाने एकवचन व्यत्ययः" श्रेष्ठा अभूवन् भवन्ति। हे ज्ञानिन्! त्वं तु नृवत् एषाम् आर्तादिचतुर्णां मध्ये नेता इव वदन् स्वात्मानं प्रकथयन् नः मत्परमात्मसमीपे उप माहि = उपगम्य वाजान्, ज्ञानबलानि दधिषे धारयसि। अतः वीरः कामक्रोधादिशत्रूणां दूरप्रक्षेपकः, भक्तयावरीतुं योग्यो वा। यथा यास्कः "वीरो वीरयति अमित्रान् वेतेर्वा स्याद्गतिकर्मणः वीरयतेः वा" निरु. १।२ त्वं दिवि द्युलोके श्रवः यशः इति नाम "प्र वो महे मन्द— श्रवणीयं यशो नृमांश्च बलम्" निरु. ११।९ यद्वा श्रवो नाम प्रशंसा नाम "श्राव इ. धूमानः — प्रशंसामिच्छमानः" निरु. ९।१० दधिषे धारयसि ॥ १८

बहूनामिति = बहूनाम् अनेकेषां जन्मनाम् अन्ते पश्चात् ज्ञानवान् आत्मतत्त्वविवेकी वासुदेवः सर्वम् = वसन्ति भूतानि अत्रेति वसुः "वस निवासे, मृ स्मृ स्निहि त्रप्यसि वसि हनि क्लिदि बन्धि मनिभ्यश्च उणा॰ १।१० इति उ प्रत्ययः। वसोरयं वासुः। दीव्यतीति देवः। वसुश्चासौ देवः वासुदेवः परमात्मा सर्वं दृश्यमानम् अदृश्यमानं सर्वं जगदिति ज्ञात्वा मां परमात्मानं प्रपद्यते प्राप्नोति स महात्मा महान् उत्कृष्टतरः आत्मा मनो यस्य स महानुभावः जगति सुदुर्लभः सुतरां दुःखेन लभ्यते ॥१९॥

(मू॰गी॰) बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥१९॥

~~सू॰२मं॰२२~~
(वेदगी॰) ~~वियातेषि रजस्पृथ्व हर्मिमानो (यहू) अक्तुभिः पश्यन् जन्मानि सूर्य~~, अथ॰कां॰१३
नूनं तदस्य काव्यो हिनोति महो देवस्य पूर्व्यस्य धाम।
एष जज्ञे बहुभिः साकमित्था पूर्वे अर्धे विषिते ससन् नु ॥६॥
अथ॰कां॰४ अनु॰१ सू॰१ मं॰६

~~वियातेषि = हे सूर्य! हे जीवात्मन्! अक्तुभिः दीप्तिभिः अहःदिनं मिमानः प्रकाशयन् सूर्यमिव त्वम् अक्तुभिः ज्ञानसाधनेन्द्रियैः पृथु रजः महतः लोकान् मिमानः ज्ञानविषयी कुर्वन् जन्मानि नानाजन्मानि पश्यन् त्वं प्रकाशमयं ब्रह्मलोकं योग विशेषरूपेण प्राप्नोषि ॥१३॥~~ यद्वा

नूनमिति - काव्यः = कविः क्रान्तदर्शी सर्वज्ञः परमात्मा "कविः क्रान्तदर्शनो भवति कवते र्वा,, निरु॰ १२।१३ कविरेव काव्यः स्वार्थेऽञ् सर्वज्ञस्य परमात्मनः ज्ञाता ज्ञानी नूनं खलु अस्य पूर्व्यस्य पूर्वतनस्य देवस्य प्रकाशात्मकस्य परमात्मनः तद् महो महत् धाम तेजोरूपं गृहं लोकं ब्रह्मलोकमित्यर्थः। हिनोति प्राप्नोति। हि = गतौ 'इत्था इत्थं "था हेतौ च छन्दसि,, इति इदमः थाप्रत्ययः। बहुभिः साकं बहुभिः जीवैः सह एषः ज्ञानी जज्ञे उत्पन्नः आसीत् परन्तु यदा पूर्वे अर्धे विषिते = विषिते पूर्वे अर्धे अपूर्णे - ज्ञानमये जन्मनि विषिते विशेषेण समन्ततः स्थिते सति प्रत्यक्जीवः ससन् नु। अस्वपत् मुक्तौ यत्नवान् न अभवत् ॥६॥

कामैरिति= तैः तैः कामैः पुत्रस्वर्गपश्वायुरादिभिः मनोरथैः हृतज्ञानाः हृतं विनष्टं ज्ञानं नित्यानित्यविवेकः येषां ते हृतज्ञानाः सन्तः स्वया-स्वकीयया प्रकृत्या वासनया नियताः वशीभूताः सन्तः तं तं नियमं विध्यन्तिक्रमम् आस्थाय आश्रित्य अन्यदेवताः परमात्मभिन्नान् देवान् प्रपद्यन्ते सेवन्ते शरणं प्राप्नुवन्तीतिभावः ।२०॥

(मू. गी.) कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥

(वेदगी.) यज्ञेयज्ञे स मर्त्यो देवान् सपर्यति ।
यः सुम्नैर्दीर्घश्रुत्तम आविवासात्येनान् ॥२॥
ऋ. अष्ट. ८ अध्या. ४ व. २८ मं. २ (मं. ३. १. सू. १३ मं. २)

यज्ञे इति= यः जनः दीर्घश्रुत्तमः अतिशयेन दीर्घस्य बहोः शास्त्रस्य श्रोता सन् भिन्नभिन्नशास्त्रेषु भिन्नभिन्नकामानां पूरकाणां भिन्नभिन्नविधीनां श्रोता इत्यर्थः। सुम्नैः = पुत्रस्वर्गपशुप्राप्त्यादिसुखकरैः पूजनैः एनान् पुत्रादिप्राप्तिकरान् ब्रह्मभिन्नान् देवान् आविवासति परिचरति। सः मर्त्यः कामहृतज्ञानः मनुष्यः यज्ञे यज्ञे याचन्ये याचन्ये भिन्नभिन्नकामनायाचनायाम् "यज्ञः कस्मात् प्रख्यातं यजतिकर्मेति नैरुक्ताः। याच्यो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्ति वा,, निरु. ३।१९। देवान् भिन्नकामनापूरकान् भिन्नभिन्नदेवान् सपर्यति सेवते ॥२॥ तथा च मुण्डकोप. मुं. १ खं. २ श्रु. ९ अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः,,

यो य इति = यः भक्तः शैवो वैष्णवो वा यां यां शैवीं वैष्णवीम् ऐन्द्रीं वा तनुं कामितम् अर्थं तनोतीति तनुः देवता, तां श्रद्धया श्रत् सत्यं तत् दधातीति श्रद्धा तया अर्चितुं फलसिद्ध्यै आराधयितुम् इच्छति। अहं परमात्मा तस्य तस्य भक्तस्य तामेव श्रद्धाम् अचलां स्थितिमतीम् विदधामि प्रयच्छामि धारयायामि वा ॥२१॥

(मू.गी.) यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥

(वेद.गी.) मनीषिणः प्रभरध्वं मनीषां यथा यथा मतयः सन्ति नृणाम्।
इन्द्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥१॥
ऋ. अष्ट.८ अध्या.६ व.१.मं.१ (मं.उ.१० अनु.९ सू.१११ मं.१)

मनीषिण इति = हे मनीषिणः! हे स्तोतारः! हे विद्वांसः! वा। नृणां कर्मनेतॄणां युष्माकं यथा यथा यादृश्यः यादृश्यः यद्यद्देवतापूजनात्मिकाः मतयः बुद्धयः सन्ति। तथा तथा तादृशीं तादृशीं मनीषां स्वस्वश्रद्धाऽनुसारिणीं स्तुतिंतत्तद्देवतापूजनात्मिकां बुद्धिं प्रभरध्वम् यूयं कुरुध्वम्। अहं परमात्मा सत्यैः सन्तम् आपयतीति सत्यं तैः सत्यैः विद्यमानैः तत्तद्देवतात्मकश्रद्धामयैः कृतेभिः कर्मभिः इन्द्रम् याज्ञिकपुरुषाणाम् आदरयितारं जीवात्मानम् एरयाम तस्मिन् तस्मिन् कर्मणि प्रेरयामि। हि यस्मात् कारणात् वीरः देवपूजायै वेगवान् विदानः देवतापूजां जानानः स जीवात्मा एव गिर्वणस्युः गीर्भिः स्तुत्यभिलाषुकः अस्ति। सत्यम् "अथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायनः, एतेः कारितश्च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च,, (नि.१।१३) इन्द्रः = तद् यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते,, (नि.१०।८) एरयाम ईर गतौ ण्यन्तस्य लोट्। वीरः = अजेरक् वीभावः ॥१॥

स इति = स च भक्तः तया पूर्वोक्तयाऽचलया श्रद्धया युक्तः संगतः सन् तस्याः स्वस्वदेवतायाः स्वस्वदेवतामूर्त्यो वा आराधनं पूजनम् ईहते करोति। ततः तत्तद्देवताद्वारा मया एव तत्तदेवताऽन्तर्यामिणा परमात्मनैव विहितान् नियतीकृतान् दत्तान् वा हितान् इष्टान् कामान् मनोरथान् लभते प्राप्नोति ॥२२॥

(मू. गी.) स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हितान् ॥२२॥

(वेद गी.) अहं तष्टेव बन्धुरं पर्यचामि हृदा मतिम्। कुवित्सोमस्यापामिति ॥ ऋ. अष्ट. ८ अध्या. ६ व. २६ मं. ५ (मंड. १० अनु. १० सू. ११९ मं. ५)

अहमिति = अहं परमात्मा एव हृदा आत्मीयेन मनःसंकल्पेन तस्य तस्य भक्तजनस्य मतिं बुद्धिं कामं वा "बन्धुरं तष्टा इव पर्यचामि" तत्तन्मतिसाधुकरणाय परिगृह्णामि। यथा तक्षा बन्धुरं सारथिनिवासस्थानं साधु करोति। तथाऽहमपि तन्मतिं तथैव करोमि। इति हेतौ = इति यस्मात् कारणात् अहं परमात्मैव कुवित् बहुवारं "कुवित् शब्दस्य बहुनामसु पाठः (निघं. ३।१) सोमस्य द्वितीयार्थे षष्ठी। सोमस्य सोमं शान्तस्वभावं सत्त्वगुणविशिष्टं ज्ञानिनाम् अपाम् = पा = पाने इति सति पीतवान् अस्मि स्वस्मिन् गृहीतवानस्मि। पा रक्षणे इत्यर्थे सति अरक्षम् तद्रक्षा मदधीना इति। सोमस्य सम्प्रदानसंज्ञा च तद्र्थ्यर्थे बहुलमिति षष्ठी। अपाम् = पा पाने लुङि "गातिस्था —" सिचो लुक्। पा रक्षणे लङि रूपम् ॥५

अन्तवदिति = अल्पमेधसाम् अल्पा सदसद्विवेचनरहिता मेधा बुद्धिर्येषां तेऽल्पमेधसः तेषाम् अल्पमेधसाम्, तेषां मनोरथवर्ति तत् तु फलम् अन्तवत् विनश्वरं भवति। देवयजः इन्द्रादिदेवताभक्ताः देवान् इन्द्रादिदेवलोकान् यान्ति प्राप्नुवन्ति। मद्भक्ताः मदुपासकाः जनाः माम् यान्ति प्राप्नुवन्ति ॥२३॥

(मू. गी.) अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।
देवान् देवयजो यान्ति मद्भक्ता[x] यान्ति मामपि ॥२३॥

(वेदगी.) देवान् वसिष्ठो अमृतान् ववन्दे ये विश्वा भुवनाभि प्रतस्थुः।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥१५
ऋ. अष्ट. ८ अध्या. २ व. ११ मं. १५ (मंड. १० अनु. ५ सू. ६६ मं. १५)
समिधा यो निशिती दाशददितिं धामभिरस्य मर्त्यः।
विश्वेत्स धीभिः सुभगो जनाँ अति द्युम्नैरुद्न इव तारिषत् ॥१४
ऋ. अष्ट. ६ अध्या. १ व. ३१ मं. १४ (मंड. ८ अनु. ३ सू. १९ मं. १४)

देवानिति = वसिष्ठः अतिशयेन वशी "इष्ठन् इमेलुक्", शस्य सः। अतिशयजितेन्द्रियः। अमृतान् अयाचितलब्धमानान् देवान् इन्द्रादिदेवान् ववन्दे स्तौति। ये देवाः विश्वा = विश्वानि सर्वाणि भुवना = भुवनानि लोकान् अभिप्रतस्थुः स्वतेजसा अभितः प्रतिष्ठन्ति "प्रपूर्वात्तिष्ठतेर्लिट्" रूपम्। ते देवा अद्य अस्मिन् काले नोऽस्मान् स्वदासान् उरुगायं प्रभूतयशस्कं यथा स्यात्तथा रासन्ताम् स्वनिवासलोकं प्रयच्छन्तु। यूयम् अस्मत्फलप्रदातारः देवाः स्वस्तिभिः आशीर्वचनैः नोऽस्मान् दासान् सदा सर्वदा पात रक्षत ॥१५ समिधेति = यः मर्त्यः मनुष्यः निशिती निशित्या नितरां तीव्रया समिधा समिद्धया संदीप्त्या भक्त्या। अस्य परमात्मनः तृतीयार्थे षष्ठी "अनेन परमात्मना प्रदत्तैः धामभिः गृहधारकैः सर्वेन्द्रियैः अदितिम् अखण्डनीयम् अविनश्वरं परमात्मानं दाशत् वरिवस्यति सेवते। स इत् = सः भक्त एव धीभिः कर्मभिः बुद्धिविशेषैः वा सुभगः सर्वप्रियः भवति। तथा द्युम्नैः यशोभिः विश्वा विश्वान् सर्वान् जनान् मनुष्यान् उद्न इव उदकानीव नौका अतितारिषत् अतिक्रामति ॥१४॥

x: सुतपावे सुता इमे शुचयो यन्ति वीतये। सोमासो दध्याशिरः, अथ. २०। ६९। ३ साम.

अव्यक्तमिति = अबुद्धयः स्वल्पबुद्धयः मूढाः मम परमेश्वरस्य अव्ययम् अविनश्वरम् अनुत्तमम् नास्ति उत्तमः यस्मात् सः अनुत्तमः तम् अनुत्तमम् उत्तमोत्तमम् परं भावं परमं तत्त्वम् अजानन्तः ज्ञानविषयम् अकुर्वन्तः अव्यक्तं "व्यज्यते इति व्यक्तः विकारः देहेन्द्रियादिसंघातः तद्रहितः अव्यक्तः परमात्मस्वरूपः तम् अव्यक्तं परमात्मस्वरूपं मां व्यक्तिम् आपन्नं मनुष्यरूपम् आपन्नं मनुष्यात्मना स्थितं मन्यन्ते स्वीकुर्वन्ति पश्यन्तीति भावः ॥२४॥

(मू. गी.) अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२४॥
(वेद गी.) असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः।
उतो सन्मन्यन्तेऽवरे ये ते शाखामुपासते। २१॥
अथ. कां. १०. अनु. ४ सू. ७ मं. २१

असच्छाखामिति = ये अवरे अधमा मूढा जनाः पुरुषाः परमम् अत्युत्कृष्टं सत् अविनश्वरं ब्रह्मस्वरूपं माम् इव = एव असच्छाखाम् "खे आकाशे हृदयाकाशे शेते इति शाखा। "पृषोदरादि — "पा. ६।३।१०९पा. इत्यनेन आद्यन्तविपर्ययः। यद्वा "शक्नोतेः (स्वादि- परस्मै-) औणादिकः खाकारः कस्य खादेशः शाखा। हृदयभावः असती च मिथ्या विनश्वरशीला शाखा च हृदयभावश्च असच्छाखा ताम् असच्छाखाम् असद्विचारवतीं प्रतिष्ठन्तीम् स्थितिम् विदुः जानन्ति स्वीयबुद्धिविषयं कुर्वन्ति। अथ च मन्यन्ते मननं कुर्वन्ति ते मूढा पुरुषा एवं शाखाम् मूलं परमात्मस्वरूपं हित्वा शाखां विनश्वरं मनुजदेहम् एव उपासते आश्रयन्ति ॥२१॥

नाहमिति = योगमायासमावृतः = योग एव माया, योगमाया भगवतो जगत्सर्जनात्मिका शक्तिः तया समावृतः समाच्छन्नः अहं येषां बीशत्या समाश्रितोऽहं सर्वस्य लोकस्य न प्रकाशः ज्ञानविषयो न भवामि। अथाऽपि योगमाया जननमरणादुःखप्रवाहयोजिकया मायया तमोरूपया वृत्त्या समावृतः समाच्छन्नः अत एव मूढः विपरीतभावं प्राप्तः अयं लोकः माम् अव्यक्तं परमात्मस्वरूपं तथा अजम् कारणशून्यम् अव्ययं विनाशरहितं न अभिजानाति न वेत्ति ॥ २५ ॥

(मू.गी.) नाऽहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥

१ (वेदगी.) परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥१॥

ऋ. अष्ट. ५ अध्या. ६ व. २४ (मं. ७ सू. ९९ मं. १) तै. ब्रा. २।८।३।२

पर इति = परस् = परस्तात् "परशब्दात् छान्दसो सिप्रत्ययः। मात्रया इत्यत्र पञ्चम्यर्थे तृतीया। मीयन्तेऽनया विषया इति मात्रा मा+त्रन् इन्द्रियवृत्तिः। तस्याः मात्रायाः इन्द्रियवृत्त्याः परः परस्तात् वर्तमानया अपरिमितया तन्वा शरीरेण वृधान! वर्धमान! हे विष्णो! हे सर्वव्यापक! परमात्मन्! ते तव महित्वं महत्त्वं प्रकाशस्वरूपमहत्तां न अनु अश्नुवन्ति न अनुव्याप्नुवन्ति मूढाः लोकाः। तव माहात्म्यं सर्वैः जनैः ज्ञातुं न शक्यते इत्यर्थः। ते तव उभे रजसी उभौ लोकौ पृथिव्याः पृथिवीत आरभ्य अन्तरिक्षं यावत् विद्म चक्षुषा उपलभामहे नान्यत् किञ्चित्। हे देव! हे प्रकाशस्वरूप परमात्मन्! त्वमेव परमस्य अत्युत्कृष्टस्य लोकस्य इत्यत्र द्वितीयार्थे षष्ठी। परमं लोकं वित्से जानासि। नान्यः साधारणः जनः ज्ञातुं शक्तः। अतः तव महत्त्वं न केनाऽपि मूढजनेन ज्ञातुम् शक्यमिति भावः ॥ १ ॥ अपि कठ उप. अ. २ वल्ली ३ मं. १२ "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा," श्वेता. अध्या. ४ श्लो. २० "न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्," तथा मुण्ड. उप. मु. ३ खं. १ श्लो. ८ "न चक्षुषा गृह्यते नाऽपि वाचा नान्यैर्देवैस्तपसा कर्मणा वा,"

वेदेति = हे अर्जुन! अहं परमात्मस्वरूपः श्रीकृष्णः समतीतानि व्यतीतानि वर्तमानानि साम्प्रतिकानि भविष्याणि अनागतानि भूतानि सर्वप्राण्यप्राणिपदार्थान् वेद जानामि। मां तु अज्ञानावृतत्वात् देहेन्द्रियसमूहः प्राणो मनो वा कश्चन पण्डितोऽपि वा न वेद न जानातीत्यर्थः

(मू. गी.) वेदाऽहं समतीतानि वर्तमानानि चार्जुन!।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥

(वेदगी.) न त्वा॑ दे॒वास॑ आशत॒ न मर्त्या॑सो अद्रिवः।
विश्वा॒ जा॒तानि॒ शव॑सा॒ऽभि॒भूर॑सि॒ न त्वा॑ दे॒वास॑ आशत ॥१॥
ऋ. अष्ट. ६ अध्या. ६ व. ३७ मं. १ (मं. ८ अनु. १ सू. ६८ मं. १)

नत्वेति = हे अद्रिवः = हे आदरणीय! परमात्मन्! देवासः ~~[illegible]~~ (सर्वैः; चक्षुरादीन्द्रियाणि) त्वा त्वां परमात्मानं न आशत स्वकर्मणा स्वबलेन वा न व्याप्नुवन्ति ज्ञातुं समर्थाः न भवन्ति। मर्त्यासः अज्ञानिनः (साधारणा) मनुष्याः त्वाम् न आशत स्वकर्मणा स्वबलेन वा न ज्ञातुं व्याप्नुवन्ति। यस्माद्धेतोः त्वं परमात्मा विश्वा विश्वानि सर्वाणि जातानि जातमात्रपदार्थान् शवसा स्वबलेन एव अभिभूः असि अभिभावुकोऽसि भवसि। तस्मात् त्वां परमात्मानं देवासः सर्वाणि इन्द्रियाणि पण्डिताः मनुष्याश्च न आशत = ज्ञातुं समर्थाः न भवन्ति ॥१॥ यथा केनोप. खं. १ श्रु. ३ "न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितात्",

इच्छाद्वेषेति=हे भारत! हे अर्जुन! हे परन्तप! हे शत्रुनाशक! इच्छाद्वेषसमुत्थेन=इच्छा वस्तुप्राप्तिकामः, द्वेषः अनिष्टवस्तुपरित्यागः, ताभ्यां समुत्थेन उद्भूतेन द्वन्द्वमोहेन सुखे दुःखज्ञाने दुःखे सुखज्ञानम् एवं सुखदुःखे, रागद्वेषौ, हानिलाभौ इत्यादि द्वन्द्वस्य मोहेन विपरीतचित्तत्वेन सर्वभूतानि सर्वप्राणिनः सर्गे शरीरोत्पत्तिसमये ~~मूढत्वं~~ संमोहं संमूढत्वं यान्ति प्राप्नुवन्ति ॥२८॥

(मू. गी.) इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥२८॥

(वेद गी.) अयं लोकः जालमासीच्छक्रस्य महतो महान्
तेनाऽहमिन्द्रजालेनामूंस्तमसाऽभिदधामि सर्वान् ॥८॥
अथ. कां. ८ अनु. ४ सू. ८ मं. ८

अयमिति=हे मुमुक्षो! हे जीवात्मन्! शक्रस्य सर्वकार्येषु शक्तस्य "शक्लृ=शक्तौ इत्यस्मात्" "स्फायितञ्चि—" (उणा. २।१३) इति रक् प्रत्ययः। महतः सर्वैः पूजनीयस्य सर्वेभ्यः उत्कृष्टस्य मम परमात्मनः अयं महान् सर्वः। लोकः प्राणिवर्गः जालम्=इच्छाद्वेषादिद्वन्द्वमोहसंवृतः आसीत्=स्वकर्मवशात् शरीरोत्पत्तिसमयतः अस्ति। जालम् जालः=णिङ् प्रत्ययः। जल=संवरणे घञ् प्रत्ययः। अहं कर्मफलप्रदाता परमात्मा तेन=मोहमयेन जालेन अन्यथास्थितस्य वस्तुनः अन्यथादर्शनसाधनेन अनात्मनि आत्मबुद्धिदर्शनसाधनेन सर्वान् अमून् प्राणिनः तमसा मोहेन कार्याकार्यकर्तृत्वविवेकशून्यत्वेन अभिदधामि संयोजयामीति ॥८॥

येषामिति=पुण्यकर्माणः पुण्यं कर्म येषां, ते पुण्यकर्माणः तेषां पुण्यकर्मणां सुकृतां येषां जनानां लोकानां पापं पौर्वदैहिकं पापम् अन्तगतं विनष्टं भवति। ते पुण्यकर्माण एव द्वन्द्वमोहनिर्मुक्ताः सज्ज्ञानप्रतिबन्धकसुखदुःखादिद्वन्द्वमोहात् निर्मुक्ताः निर्गताः सन्तः दृढव्रताः, दृढं परिपक्वं व्रतं बुद्धिनिश्चयः येषां, ते दृढव्रताः पूर्णनिश्चयाः मां परमात्मानं भजन्ति सेवन्ते ॥ २८ ॥

(मू. गी.) येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

(वेद गी.) पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम्।
ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते ॥ अथ. कां. ५ सू. १७ मं. ११
ऋ. अष्ट. ८ अध्या. ८ व. ७ मं. ७ (मंड. १० अनु. ९ सू. १०९ मं. ७)

पुनर्दायेति=देवैः देवाः "सुपां सुपो भवन्तीति जसस्तृतीयादेशः" देवाः द्वन्द्वमोहनिर्मुक्ताः विद्वांसः ज्ञानिनः निष्किल्बिषं "किल्बिषाणाम् अभावः निष्किल्बिषम् आत्मानं निष्पापं कृत्वी कृत्वा विधाय "स्नात्व्यादयश्चेति निपातितः। ब्रह्मजायां ब्रह्मणः जायते इति ब्रह्मजा भक्तिः ताम् अयते प्राप्नोतीति ब्रह्मजाया तां ब्रह्मजायां ब्रह्मभक्तिप्राप्तिं यद्वा "ब्रह्मणः परमात्मनः जाया पत्नी ब्रह्मजाया ब्रह्मभक्तिः तां ब्रह्मजायां ब्रह्मभक्तिं पुनर्दाय "पुनश्चनसौ च्छन्दसि" गतिसंज्ञा वक्तव्या, पुनः शब्दस्य गतिसंज्ञायां समासल्यपो "न ल्यपि" इतीत्वप्रतिषेधः "कृदुत्तरपदप्रकृतिस्वरत्वम्" मनसि पुनर्दत्वा ब्रह्मसेवायां प्रविश्य पृथिव्याः ऊर्जं रसभूतम् अन्नं यज्ञसम्बन्धं भक्त्वाय भक्त्वा विभज्य। "क्त्वो यक्" इति यगागमः। मिताहारी भूत्वा उरुगायम् उरुभिः बहुभिः जीवैः गायं स्तोतव्यम् उरुगायं परमात्मानम् उपासते सेवन्ते ॥ ७ ॥ यथा श्वेताश्व. अ. १ श्रु. १० "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः"

जरामरणेति = ये मुमुक्षवः जनाः मां परमेश्वरम् आश्रित्य मद्भजनासक्तः सन् जरामरणमोक्षाय = जरा वृद्धावस्था, मरणं देहपरित्यागः तयोः मोक्षाय तज्जनितदुःखपरित्यागाय यतन्ति प्रयत्नं कुर्वन्ति। ते जनाः कृत्स्नं समग्रम् अध्यात्मम् प्रत्यग्रूपं सर्वं वस्तु अखिलं सर्वं कर्म सुखदुःखाद्यनुभवकारणं कर्म विदुः जानन्ति। तथा तत् ब्रह्म विदुः जानन्ति ॥ २९ ॥

(भू. गी.) जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९

(वेद गी.) तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः।
अहिमोहानमप आशयानं प्रमायाभिर्मायिनं सक्षदिन्द्रः ॥ ६
ऋ. अष्ट. ४ अध्या. १ व. २८ मं. ६ (मं. ५ अनु. २ सू. २. मं. ६)

तुभ्येदिति = इन्द्रः ब्रह्मैश्वर्योपपन्नः यः मुमुक्षुः जीवात्मा ओहानं सत्कर्मावरोधकम्, अपः ब्रह्म आशयानम् आवृत्य शयानं कुर्वन्तं मायिनं शुभकर्मभ्यः छलकर्तारम् अहिम् पापं मायाभिः ब्रह्मज्ञानशक्तिभिः प्रसहत् अभिभवति तिरस्करोति। एते इमे ते एव मरुतः स्तोतारः मुमुक्षवः जनाः तुभ्येत् = तुभ्यं परमात्मने एव, अर्कम् अर्चनीयं स्तोत्रम् अर्चन्ति कुर्वन्ति। अतः एव सुशेवाः = शेवमिति सुखनाम "शेवं मयस्सुखं" एव ते अन्धः पापप्रवृत्तिकारकम् अन्नं सुन्वन्ति निष्पीडयन्ति, परित्यजन्तीत्यर्थः॥ सुन्वन्ति = षुञ् अभिषवे। अभिषवः स्नपनं, पीडनं स्नानं सुरासन्धानं च। "इन्मवोरिति यण्। मरुतः "मरु ऋत्विङ्नामसु पाठः। "मरुतः प्रथमन्तमितो भवन्ति। मरुतो मितराविणो मितरोचिनो वा महद् द्रवन्तीति वा, (नि. ११।१३) अन्धः = अन्ननामैतत् "अदेर्नुम् धश्च" (उणा. ४।२०५) इत्यसुनि व्युत्पादितम्। अहिम् = अहिरेनादेति अन्तरिक्षे, अयमपीतरोऽहिरेतस्मादेव। निर्ह्रसित उपसर्गः "आहन्तीति (नि. २।१७) आ+हन्+डिन्, टिलोपः "आङो ह्रस्वः" इति "अहिः" इ

साधिभूतेति= ये मुमुक्षवः जनाः साधिभूताधिदैवम् = भूते अधि इति अधिभूतं सूर्यादि सर्वं कार्यम्। अधिदैवम् देवे परमात्मनि अधि
अधिदैवं ताभ्यां सह वर्तते इति साधिभूताधिदैवम्। साधियज्ञम् यज्ञे अधि इति अधियज्ञं तेन सह वर्तते इति साधियज्ञम् अधि
यज्ञात्मना स्थितं मां परब्रह्म विदुः कथयन्ति। युक्तचेतसः = मयि युक्तं समाहितं चेतः मनः यैः ते युक्तचेतसः समाहितचित्ताः
भूत्वा प्रयाणकालेऽपि मृत्युसमयेऽपि मां ब्रह्म विदुः जानन्ति ॥ ३० ॥ इतिश्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबो
धिन्यां सप्तमोऽध्यायः समाप्तः। श्रीकृष्णार्पणमस्तु।

(मू० गी०) साधिभूताधिदैवं मां साऽधियज्ञं च ये विदुः।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥
इतिश्रीमद्भगवद्गीतायां श्रीकृष्णार्जुन० सप्तमोऽध्यायः।

(वेद गी०) ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ३२
ऋ० अष्ट० २ अध्या० ३ व० २१ मं० ३९ (मं० ३। १ अनु० २२ सू० १६४ मं० ३९)

ऋच इति= अधिभूताधिदैवाधियज्ञप्रतिपादकोऽयं मन्त्रः। अधिभूतपक्षे यथा = ऋचः अनेन अर्चन्तीति ऋचः शरीराणि। परमे अत्युत्कृष्टे
व्योम्नि भवति नो नार्थकः विशेषेण ज्ञातरि अक्षरे = "न क्षरति इत्यक्षरम्" आत्मा, तस्मिन् अक्षरे सति "अक्षरं न क्षरति, न क्षीयते
वाऽक्षरं भवति वाचोऽक्ष इति वा। अक्षो मानस्याशनात् तत्प्रकृतीतरद् वर्तनसामान्यादिति (नि० १३।११) यस्मिन् आत्मनि विश्वे
सर्वे देवाः इन्द्रियाणि "तानि हि विषयेषु द्योतयन्ते इति देवाः। अधिनिषेदुः अधिनिषण्णानि भवन्ति। यः पुरुषः तत् अक्षरम्
आत्मानं न वेद न जानाति सः जीवात्मा ऋचा देहेन किं करिष्यति न तस्य जीवितेन अर्थः। ये इत् ये एव तद् अक्षरम्
आत्मानं विदुः जानन्ति। ते इमे देहाः देहविशिष्टाः जीवात्मानः समासते सम्यक् तिष्ठन्ति "अपुनरावृत्त्या स्वरूपेऽव-
स्थाने समासनम्। इत्यधिभूतम् ॥ यथा च निरुक्ते परिशिष्टे "शरीरमत्र ऋगुच्यते यदनेन अर्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि

देहाऽधिष्ठितः

तस्य यदविनाशि धर्मि तदक्षरं भवतीन्द्रियाण्यत्र देवा उच्यन्ते। यानि अस्मिन्नात्मनि एकं भवन्तीत्यात्मप्रवादाः (नि. १३।११)

**अथाधिदैवपक्षे** - ऋचः यदेनम् अर्चन्ति इति स्वप्रभया प्राणिनां ऋचः ब्रह्माण्डस्य प्राणिनः परमे व्योमनि अत्यन्तरक्षके अक्षरे सूर्ये "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" ते. आर. १०।१३ इतिश्रुत्युक्तस्वरूपे सूर्ये एव आश्रिताः सन्ति। यस्मिन् सूर्ये विश्वे सर्वे देवाः द्योतमानाः रश्मयः अधिनिषेदुः वर्तन्ते। यः प्राणी तत् अक्षरं तं सूर्यं न वेद न जानाति। स पुमान् ऋचा प्राणिवर्गेण किं करिष्यति। य इत् ये एव प्राणिनः तत् सूर्यस्वरूपं हिरण्मयं स्वरूपं जानन्ति भावयन्ति। ते सर्वे एव विद्वांसः समासते सुखेन रोगादिरहिताः भोगिनः सन्तः चिरकालं जीवन्ति। **इत्यधिदैवम्।**

यथा निरुक्ते परिशिष्टे "आदित्य इति पुत्रः शाकपूणेरेषर्ग्भवति। यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि यदन्यन्मं त्रेभ्यः तदक्षरं भवति। रश्मयोऽत्र देवा उच्यन्ते ये एतस्मिन्नधिनिषण्णाः" इत्यधिदैवतम् (निरु. १३।११)।

**अथाऽध्यात्मपक्षे** - ऋचः ऋक्शब्देन ऋक्प्रधानभूताः साङ्गापरविद्यात्मकाः चत्वारो वेदा उच्यन्ते। ऋचः चत्वारो वेदाः परमे अत्युत्कृष्टे निरतिशये व्योमन् व्योमनि ~~ऋगादिषु ये देवाः, ते मंत्रद्वारेण अक्षरे निषण्णाः। तस्य शब्दकारणत्वात्। अथवा मात्रायां पृथिवी अग्निः, ऋग्वेदः पृथिवीलोकनिवासिन इत्यर्थः। द्वितीयां मात्रायाम् अन्तरिक्षं वायुः यजूंषि, तल्लोकनिवासिनो जना इति। तृतीयां मात्रायां द्यौः आदित्यः सामानि, तल्लोकनिवासिनो जना इति विज्ञायते। ओंकार एवेदं सर्वम् इति~~। व्योमसदृशे अलेपत्वनीरूपत्वव्याप्तित्वादिसादृश्येन व्योम इत्युक्तम्। यद्वा विशेषेण सर्वस्य रक्षके यद्वा विविधम् अस्मिन् शब्दजातमोतमिति व्योम, तस्मिन् अक्षरे तिसृषु मात्रासु अकारोकारमकारलक्षणासु उपशान्तासु यद् अवशिष्यते तदक्षरम् तस्मिन् अक्षरे परमात्मनि आश्रित्य तिष्ठन्ति। यस्मिन् ओंकारे परमात्मनि विश्वे सर्वे देवाः अधिनिषेदुः निषदन्ति आश्रित्य तिष्ठन्ति। ऋगादिषु ये देवाः, ते मंत्रद्वारेण अक्षरे निषण्णाः तस्य शब्दकारणत्वात्। अथवा मात्रायां पृथिवी अग्निः ऋग्वेदः पृथिवीलोकनिवासिन इत्यर्थः। द्वितीयायां मात्रायाम् अन्तरिक्षं, वायुः, यजूंषि, तल्लोकनिवासिनो जना इति। तृतीयायां मात्रायां द्यौः, आदित्यः, सामानि तल्लोकनिवासिनो जना इति विज्ञायते। ओंकार एवेदम्

तस्मिन् यथोक्तलक्षणे अक्षरे परमात्मनि ऋग्उपलक्षिताः सर्वे साङ्गाः वेदाः पर्यवसिता „ इत्यर्थः । यः यो मर्त्यः तत् तादृशम् देवादीनां स्वरूपलाभास्पदं समग्रवेदैस्तात्पर्यं प्रतिपाद्यं ब्रह्म न वेद न जानाति । सः मर्त्यः ऋचा ऋगादिशब्दजालेन स्तुत्या वा किं करिष्यति । वेदनसाधनेन वेदनवेद्यम् अविदित्वा किं साधयतीत्यर्थः । ये इत् ये एव तत् तत्त्वम् ओंकारं परं ब्रह्म विदुः जानन्ति । ते इमे त एव इमे ज्ञातारः समासते अपुनरावृत्त्या स्वस्वरूपस्थित्या च सम्यक् तिष्ठन्ति । यथा च निरुक्त परिशिष्टे " ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिनिषण्णाः सर्वे, यस्तन्न वेद, किं स ऋचा करिष्यति । य इत्तद्विदुस्त इमे समासते इति विदुष उपदिशति । कतमत्तदेतदक्षरम् "ओम्" इत्येषा वागिति शाकपूणिः ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु मंत्रेषु एतद्धा एतदक्षरं यत् सर्वां त्रयीं [illegible] विद्यां प्रतिप्रतीति च ब्राह्मणम् (निरु. परि. १३।१०) इतिश्रीलैयावास्तव्यजगन्नाथप्रशास्त्रिसंकलितायां ✗वेदगीतार्थबोधिन्यां सप्तमोऽध्यायः समाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥

✗ ओम् = अवतेस्तर्पणार्थात् "अन्येभ्योऽपि दृश्यते „ इति मनिन्प्रत्ययः "नेड्वशि कृति „ इतीट्प्रतिषेधः "ज्वरत्वर — ऊ इत्यादिना वकारोपधयोरूठ — " सप्तम्या लुक् „ "न ङि सम्बुद्ध्योः „ इति नलोपप्रतिषेधः ओम्नि निरतिशयानन्दस्वरूपे ॥

(अथाष्टमोऽध्याय:)

"यस्य नि:श्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युदर्णवम् १
"वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् " २॥

अर्जुन उवाच — हे पुरुषोत्तम! हे जनार्दन! तद् ब्रह्म किं किंलक्षणमस्तीत्युच्यताम्। किमध्यात्मम्? आत्मा देहः तम् अधिकृत्य वर्ततीति अध्यात्मं प्राणः श्रोत्रादिकं वा आत्मा वा तत्किंस्वरूपमस्ति। कर्म श्रौतं स्मार्तं वा कर्म किंस्वरूपमस्ति। अधिभूतं किंस्वरूपं प्रोक्तं कथितम्। अधिदैवम् अधिदैवस्वरूपं किम् उच्यते कथ्यते ॥१॥ अधियज्ञ इति = हे मधूसूदन! हे कृष्ण! अधियज्ञः कः किंस्वरूपः। अत्र अस्मिन् देहे अधियज्ञः कथं केन प्रकारेण तिष्ठति। नियतात्मभिः = नियतः वशीकृतः आत्मा मनो यैः तैः नियतात्मभिः वशीकृतमनोभिः प्रयाणकाले देहत्यागसमये कथं केन प्रकारेण सगुणरूपेण निर्गुणरूपेण वा ज्ञेयोऽसि ज्ञातुं योग्योऽसि ॥२॥

अर्जुन उवाच

(मू०गी०) किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम।
अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

(वेदगी०) . . . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .

परमेव हि ब्रह्म देहादौ प्रविश्य प्रत्यागात्मभावमनुभवति इति स्वभावः

अक्षरमिति = अक्षरं न क्षरति न नश्यति इत्यक्षरं परमं ब्रह्म उच्यते स्वभावः स्वयमेव भवतीति स्वभावः परं ब्रह्म अध्यात्मम् उच्यते
भूतभावोद्भवकरः = भूतानां भवः जन्म उद्भवः वृद्धिः तयोः कर्ता, यद्वा भूतानि एव भावाः भूतभावाः स्थावरजंगमपदार्थः
तेषाम् उद्भवः उत्पत्तिः तं करोतीति भूतभावोद्भवकरः विसर्गः देवोद्देशेन चरुपुरोडाशादि द्रव्यपरित्यागः यज्ञो वा कर्मसंज्ञितः कर्म उच्यते। ३

(भ. गी.) श्रीभगवानुवाच। अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥
(वेदगी.) सुभूः स्वयम्भूः प्रथमोऽन्तर्महत्यर्णवे।
दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः॥ यजुः २३।६३

सुभूरिति = हे जिज्ञासो! हे जीवात्मन्! सः परमात्मा अक्षरस्वरूपः सुभूः सम्यक्तया भवनशीलः सर्वोपरि विराजमानः। स एव
स्वयम्भूः स्वयं भवतीति स्वयम्भूः उत्पत्तिविनाशरहितः स्वभावत्वेन अध्यात्ममित्युच्यते। महति अतिविस्तृते अर्णवे संसारे
अन्तः मध्ये ऋत्वियं ऋत्वनुकूलं गर्भं भूतभावोद्भवकरं विसर्गं कर्म दधे धारयति। यतः यस्मात् ~~गर्भात्~~ कर्मणः
प्रजापतिः अग्निसूर्यादिः जातः उत्पन्नः ॥६३॥

अधिभूतमिति = क्षरः क्षरति नश्यतीति क्षरः भावः पदार्थः अधिभूतम् । सर्वम् उत्पत्तिमत् अधिभूतमस्तीति भावः । पुरुषः पुरि
शयनात् पुरुषः परमात्माऽधिदैवतम् उच्यते । हे देहभृतां वर ! देहधारिणां श्रेष्ठ ! अर्जुन ! अत्र देहे अस्मिन् शरीरे अहम्
एव अधियज्ञः इज्यते क्रियते इति यज्ञः श्रौतस्मार्तं कर्म तदधिकृत्य तिष्ठतीति अधियज्ञोऽहमेवाऽस्मि ॥ ४ ॥

(मू. गी.) अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवाऽत्र देहे देहभृतां वर ॥ ४ ॥

(वेद गी.) इदं यमस्य सादनं देवमानं यदुच्यते । इयमस्य धम्यते
नाडीरयं गीर्भिः परिष्कृतः ॥ ऋ. अष्ट. ८ अध्या. ७ व. २३ मं. ७
पृथक् सर्वे प्राजापत्याः प्राणानात्मसु बिभ्रति ।
तान्सर्वान् ब्रह्म रक्षति ब्रह्मचारिण्याभृतम् ॥ २२ ॥
अथ. कां. ११ अनु. ३ सू. ५ मं. २२

इदमिति = इदं क्षेत्रम् अधिभूतम् वा यत् देवमानं देवानाम् इन्द्रियाणां मानं विषयनिर्माणसाधनम् उच्यते कथ्यते । तत् क्षेत्रम् अ
धिभूतं यमस्य मृत्योः सादनं सदनं स्थानम् अस्ति । इदं क्षेत्रं विनश्वरमस्तीति भावः । सादनं = सदनमित्यत्र छान्दसः संहित
को दीर्घः । अस्य क्षेत्रस्य विनाशसूचनाय इयं नाडी "वचनव्यत्ययः" देहस्था शिराः धम्यते परमात्मना वाद्यते । अयम् अ
यं देहः गीर्भिः वाणीभिः परिष्कृतः अलंकृतः अस्ति । परिष्कृतः । "सं परिभ्यां करोतौ -" पा. ६ । १ । १३८ "सुडागमः" "परिनिवि
भ्यः -" इति षत्वम् ॥ ७ ॥ पृथगिति = सर्वे प्राजापत्याः प्रजापतिना परमात्मना सृष्टाः देवमनुष्यादयः आत्मसु भिन्नभिन्नेषु स्वस्वदेहेषु
पृथक् भिन्नभिन्नतया प्राणान् = परमात्मसत्तां बिभ्रति धारयन्ति । यद्वा "प्राजापत्याः प्रजापतिना ब्रह्मणा सृष्टाः सर्वे पदार्थाः का
रूपतो मपन्नाः आत्मसु स्वस्वदेहेषु प्राणरूपेण स्थितिकारकं बलं पृथक् भिन्नं २ बिभ्रति धारयन्ति । अधिभूतत्वमापन्नाः सर्वे पदार्थाः
इत्यर्थः । ब्रह्मचारिणि वेदविदि ~~आभृतं भावितं~~ ^धृतं पालितं वा ~~यः~~ परमात्मा तान् सर्वान् पदार्थान् अधियज्ञस्वरूपेण रक्षति पालयति
इति भावः ॥ २२ ॥

अधिदैवतमा-

यः ब्रह्मविद् यतिः अन्तकाले मृत्युसमये मामेव परमात्मानं स्मरन् ध्यायन् कलेवरं शरीरं मुक्त्वा त्यक्त्वा प्रयाति देहत्यागं करोति सः मुमुक्षुः मद्भावं मत्स्वरूपं याति प्राप्नोति अत्र अस्मिन् विषये संशयः संदेहः नास्ति ।५॥

(मू॰ गी॰) अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

(वेदगी॰) अहमेवास्म्यमावास्या३ मामा वसन्ति सुकृतो मयीमे ।
मयि देवा उभये साध्याश्चेन्द्रज्येष्ठाः समगच्छन्त सर्वे ॥२॥
अथ॰ कां॰ ७ अनु॰ ७ सू॰ ८४ मं॰ २

अहमिति = अहं परमात्मा एव अमावास्या = अमा निर्माणरहिता वसति अत्र स्वरूपे इति अमावास्या कारणरहितोऽस्मि । "अमा अस्मिन्नदन्ति" अमा पुनरनिमित्तं भवति (निरु॰ ५।७) इमे सुकृतः सुकर्माणः ब्रह्मविदः अन्तकाले माम् एव स्मरन्तः मयि परमात्मनि आवसन्ति । अवतिष्ठन्ते । इन्द्रज्येष्ठाः इन्द्रं ज्ञानैश्वर्यं ज्येष्ठं येषां ते इन्द्रज्येष्ठा ज्ञानैश्वर्ये महान्तः ।
साध्याः ज्ञानकर्मसमुच्चयकारिणः मद्भावमापन्नाः विराडुपासकाः वा चशब्दात् सिद्धाः इत्युभये द्विप्रकाराः सर्वे देवाः ज्ञानिनः विद्वांसः मयि परमात्मनि समगच्छन्त मद्भावं यान्ति मयि मिलाः भवन्तीति भावः । अमावास्या = "अमावस्यदन्यतरस्याम्" इति पक्षे ण्यत् । णित्वादुपधावृद्धिः । यद्वा अमावास्या "आ मा वसन्ति देवाः" आङ् व सत्योर्मध्ये मा इति अस्मदो द्वितीयैकवचनेस्य प्रयोगः । आङुपसर्गस्य ह्रस्वत्वम् । इत्यमावास्याशब्दनिष्पत्तिः प्रदर्शिता । आवसन्ति = "उपान्वध्याङ्वसः" इत्याङ्पूर्ववसिप्रयोगे माम् इत्यस्य कर्मता ॥२॥

इन्द्रः एव ज्येष्ठाः येषां

हे कौन्तेय! हे अर्जुन! यः पुरुषः अन्ते मृत्युकाले यं यं भावं यं यं स्वरूपं स्मरन् ध्यायन् अन्ते मृत्युकाले कलेवरं देहं त्यजति मुञ्चति। सः पुरुषः सदा सर्वदा तद्भावभावितः संस्कृतः सन् तं तमेव स्वरूपम् एति प्राप्नोति ॥ ६ ॥

(मू० गी०) यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः ॥ ६ ॥

(वेद गी०) ये अग्नयः शशमानाः परेयुर्हित्वा द्वेषांस्यनपत्यवन्तः।
ते द्यामुदित्याविदन्त लोकं नाकस्य पृष्ठे अधि दीध्यानाः ॥ ४७ ॥
अथ० कां० १८ अनु० २ सू० २ मं० ४७ (य द्वा)

प्रच्यवस्व तन्वं१ संभरस्व मा ते गात्रा वि हायि मो शरीरम्।
मनो निविष्टमनुसंविशस्व यत्र भूमेर्जुषसे तत्र गच्छ ॥ १ ॥
अथ० कां० १८ सू० ३ मं० ९

ये इति:- ये ये पुरुषाः अग्नयः लौकिकव्यवहारप्राप्तये अग्रगामिनो भूत्वा द्वेषांसि पापानि हित्वा त्यक्त्वा अनपत्यवन्तः लौकिकवासनाऽपत्यरहिताः सन्तः शशमानाः भिन्नान् भिन्नान् देवान् स्तुवन्तः सन्तः परेयुः शरीरं त्यजन्ति। ते पुरुषाः अधिदीध्यानाः स्वस्वदेवभावनया अधिकं देदीप्यमानाः द्यां प्रकाशमयीम् अवस्थाम् उदित्य प्राप्य ऊर्ध्वं गत्वेति भावः। नाकस्य दुःखसंस्पर्शरहितस्य पृष्ठे उपरिभागे लोकं स्वसुकृतफलोपभोगस्थानम् अविदन्त अलभन्त। विद्लृ लाभे लृदित्वात् आत्मने पदेऽपि व्यत्ययेन च्लेः अङ् आदेशः यद्वा लङि "अनित्यम् आगमशासनम्" इति नुम भावः ॥ ४७ ॥ (य द्वा) प्रच्यवस्वेति:- हे जीवात्मन्! त्वं तन्वं स्वशरीरं प्रच्यवस्व प्रकर्षेण वियुङ्क्ष्व। पुनः तन्वम् अपरस्मिन् जन्मनि उत्पत्स्यमानं शरीरं संभरस्व सम्यक्तया संभृतं कुरु। ते तव गात्रा गात्राणि हस्तपादादीनि अंगानि मा विहायि परित्यक्तानि मा भूवन्। तथा शरीरम् अवयविभूतः सूक्ष्मः देहः मो विहायि परित्यक्तो मा भूत्। यत्र यस्मिन् भावे त्वदीयं मनः चित्तं निविष्टम् अवस्थितम् अस्ति तत्र तस्मिन्नेव भावे संविशस्व संप्रविष्टो भव। तथा भूमेः पृथिव्याः यत्र यस्मिन् प्रदेशे जुषसे प्रीयसे। तत्र गच्छ तं प्रदेशं प्राप्नुहि। जुषसे = जुषी प्रीतिसेवनयोः। ॥ १ ॥

हे अर्जुन! तस्मात् कारणात् सर्वेषु कालेषु आहारविहारादिषु सर्वदा मां परमात्मानम् अनुस्मर विचिन्तय। युध्य च युद्धं कुरु। मयि परमात्मनि अर्पितमनोबुद्धिः स्थापितमनोबुद्धिः सन् त्वं मां परमात्मानम् एव एष्यसि प्राप्स्यसि इत्यत्र संशयो नास्ति। ८॥

(मू. गी.) तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः॥८॥

(वेदगी.) एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम्।
स नः शर्म त्रिवरूथं वियंसत् पातं नो द्यावापृथिवी उपस्थे॥
ऋ. अष्ट. ६ अध्या. ३ व. २८ मं. २ (मं. ८ अनु. ५ सू. ४२ मं. २)

एवेति-गुरुः जिज्ञासुं कथयति। हे जिज्ञासो! बृहन्तं महान्तं महान्तं वरुणं योगिभिः वरणीयं सर्वश्रेष्ठं वा परमात्मानं वन्दस्व स्मरणपूर्वकं स्तुहि। तथा अमृतस्य मुक्तेः गोपाम् गोपायितारं धीरं सर्वधारकं सर्वप्राज्ञं वा नमस्य नमस्कुरु। सः परमात्मा नः अस्मभ्यं गुरुशिष्यार्थं त्रिवरूथम् आध्यात्मिकाऽधिभौतिकाधिदैविकेति त्रिविधदुःखनिवारकं कवचमयं शर्म गृहं धाम "शर्मेति गृहनाम" वियंसत प्रयच्छतु। हे द्यावापृथिवी! हे प्रकाशमान सर्वव्यापक परमात्मन्! उपस्थे क्रोडे ~~वर्तमानान्~~ वसतः नोऽस्मान् सर्वान् युद्धादिसांसारिककार्यात् पातम् रक्षतम्॥२॥

अभ्यासेति=हे पार्थ! हे अर्जुन! अभ्यासयोगयुक्तेन पुनः पुनरीश्वरध्यानमभ्यासः समाधिः, तेन प्राप्तः यः योगः निर्विकल्पसमाधिः
तेन युक्तेन ब्रह्माकारवृत्तिं प्राप्तेन नान्यगामिना अन्यत्र गमनरहितेन चेतसा मनसा अनुचिन्तयन् परमात्मनः ध्यानं कुर्वन्
यतिः परमं सर्वोत्कृष्टं दिव्यं प्रकाशमयं पुरुषं परमात्मानं याति प्राप्नोति ॥८॥

(मू.गी.) अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थाऽनुचिन्तयन् ॥८॥

(वेदगी.) अन्तरिच्छन्ति तं जने रुद्रं परः मनीषया। गृभ्णन्ति जिह्वया ससम् ॥३
ऋ. अष्ट ६ अध्या.५ व.१४ मं.३ (मं.३.८ अनु.८ सू.६१ मं.३) यद्वा
युक्तेन मनसा वयं देवस्य सवितुः सवे। स्वर्ग्याय शक्त्या ॥ यजु. ११।२

अन्तरिति=ये जने=जनाः योगिनः पुरुषाः "विभक्तिव्यत्ययः" परः मनीषया अत्युत्कृष्टयोगाऽभ्यासजन्यया प्रज्ञया "अत्युत्कृष्टया स्तु
त्या वा। यथाह यास्कः "मनीषया मनसः ईषया स्तुत्या प्रज्ञया वा (निरु.१।१०) तं रुद्रं रुद् दुःखं तस्य द्रावयितारं अथवा रुत
स्तुतिः तया गन्तव्यं स्तुत्यं तं परमात्मानम् अन्तः अन्तरात्मनि योगाऽभ्यासेन इच्छन्ति अभिलषन्ति। ते ब्रह्मविदः यतयः
एव जिह्वया प्रभवया योगयुक्तया मत्या परमात्मानम् अनुचिन्तयन्तः ससं स्वपन्तं सर्ववस्तुशायं परमात्मानं गृभ्ण
न्ति गच्छन्ति लभन्ते। यथा च यास्कः प्राह। ससम् स्वप्नमेतन्माध्यमकं ज्योतिरनित्यदर्शनम् (नि.५।३) ३॥ यद्वा
हे जिज्ञासवः! यतयः! वयं मुमुक्षवः युक्तेन अभ्यासयोगयुक्तेन मनसा चेतसा देवस्य ज्योतिःस्वरूपस्य सवितुः जगदु
त्पादकस्य सवे यज्ञे यजनदेशे परमधाम्नि शक्त्या यथाशक्त्या स्वर्ग्याय आनन्दोपभोगाय प्राप्तुं ~~यत्नं कुर्मः~~ प्राप्नुयाम
इतिशेषः ३॥ पूजने

वेदमी

× मूर्धानमस्य संसीव्याऽथर्वा हृदयं च यत्। मस्तिष्कादूर्ध्वः प्रैरयत् पवमानोऽधि शीर्षतः ॥ अथ० कां० १० सू० २ मं० २६ | अध्या० ८

मूर्धानमिति = अथर्वा = थर्व कम्पने न थर्वा अथर्वा निश्चलः योगी अस्य = स्वस्य देहस्य मूर्धानं शिरः च = पुनः यत् हृदयम् अस्ति

तत् परस्परं संसीव्य संबध्य पवमानः प्राणवायुः शीर्षतः अधि शिरोमध्ये मस्तिष्कात् ~~उपरि~~ ऊर्ध्वः उपरि प्रैरयत् प्रेरयति | श्लो० ९, १०

× एकस्मिन् केन्द्रे श्लेषं कृत्वा

कविमिति = यः मुमुक्षुः भक्त्या भगवद्विषयिकया वृत्त्या च तथा योगबलेन योगस्य समाधेः बलेन युक्तः मिलितः सन् प्रयाणकाले मृत्युसमये अचलेन स्थिरेण एकान्तेन मनसा चिन्तेन सर्वस्य जगतः धातारं कर्मानुसारिफलप्रदातारम् अचिन्त्यरूपम् आदित्यवर्णम् आदित्य इव नित्यः वर्णः प्रकाशो यस्य तथाविधं तमसः अज्ञानात् परस्तात् परम्। अणोः अतिसूक्ष्मात् आकाशादेः अपि अणीयांसम् सूक्ष्मतरम् अनुशासितारं सर्वस्य नियन्तारं पुराणं सनातनं कविं सर्वज्ञं परमात्मानम् अनुस्मरेत् अनुसंदध्यात्। तथा च सः भ्रुवोः मध्ये सम्यक् प्राणं प्राणवायुम् आवेश्य संधार्य दिव्यं प्रकाशमयं परं पुरुषं परमात्मानम् उपैति प्राप्नोति ॥ ९॥ १०

(मू० गी०) कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः। सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९। प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव। भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥ ×

(वेदमी०) ध्रुवोऽच्युतः प्रमृणीहि शत्रून् छत्रूयतोऽधरान् पादयस्व। सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह ॥ अथ० कां० ६ अनु० ९ सू० ~~८८~~ ८८ मं० ३

कविः कविंत्वा दिवि रूपमासजदप्रभूती वरुणो निरपः सृजत्। क्षेमं कृण्वानः जनयो न सिन्धवस्ता अस्य वर्णं शुचयो भरिभ्रति ॥ ७ ॥

ऋ० अष्ट० ८ अध्या० ७ व० १ मं० ७ (मं० ९ अनु० १० सू० १२८ मं० ७)

ध्रुव इति = हे मुमुक्षो! इह अस्मिन् योगसमाधौ ध्रुवः भ्रुवोर्मध्ये प्राणस्थापनेन स्थिरीभूतः अत एव अच्युतः योगसमाधितः पतनरहितः त्वं शत्रून् मुक्तिप्रतिबन्धकान् कामक्रोधलोभमोहाङ्कुरशत्रून् प्रमृणीहि प्रजहि। "मृङ् हिंसायाम्" शत्रूयतः = शत्रुवदाचरणशीलान् मानसिकविचारान् भक्त्या योगबलेन च अधरान् अधोमुखान् संसारमुखरहितान् पादयस्व निपतितान् कुरु। देहस्थशत्रूणाम् अपगमे सति सर्वाः दिशः सर्वतः सर्वे पदार्थाः संमनसः समानमनस्काः एकरूपा ब्रह्मवदाभासमानाः सध्रीचीः त्वया सह अन्वयः वर्तमानाः त्वत्सेवापराधराः भविष्यन्ति। सर्वे पदार्थाः त्वन्मुक्तिं प्राप्य तथा श्वेता० उप० अध्या० ३ श्रु० ८ "ओं वेदाऽहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्"

सर्वद्वारेति = यः मुमुक्षुः सर्वद्वाराणि नासिकादिसकलनवद्वाराणि संयम्य संनिरुध्य मनश्च चित्तञ्च हृदि हृदयदेशे निरुध्य संयोज्य आत्मनः प्राणं प्राणवायुं मूर्ध्नि ब्रह्मरन्ध्रे आधाय संस्थाप्य योगधारणां योगक्रियाम् आस्थितः आश्रितः सन् एकाक्षरम् एकं च तद् अक्षरम् अविनश्वरं च एकाक्षरं ब्रह्म यत् ओंवाचकमस्ति तदेव व्याहरन् प्रस्फुटम् उच्चारयन् मां परमेश्वरं मनसा अनुस्मरन् ध्यायन् देहं स्थूलशरीरं त्यजन् विमुञ्चन् प्रयाति देहत्यागं करोति। सः योगी परमां गतिं कैवल्यपदवीं याति गच्छति ॥ १२, १३ ॥

(मू. गी.) सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च। मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ॥ यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥

(वेद गी.) संसिचो नाम ते देवाः ये संभारान्त्समभरन्। सर्वं संसिच्य मर्त्यं देवाः पुरुषमाविशन् ॥ अथर्व. कां. ११ अनु. ४ सू. ८ मं. १३

त्रयः सुपर्णास्त्रिवृता यदायन्नेकाक्षरमभिसंभूय शक्राः। प्रत्यौहन्मृत्युममृतेन साकमन्तर्दधाना दुरितानि विश्वा ॥ अथ. कां. ५ अनु. ६ सू. २८ मं. ८

संसिच इति = ये देवाः ब्रह्मज्ञानिनः योगिनः संभारान् संध्रियन्ते एभिः देहः इति संभाराः स्वस्वविषयसंधायकाः इन्द्रियगणाः तान् समभरन् एकस्मिन् स्थाने संरुन्धन्ति। ते एव संसिचः स्वप्राणसंधायकाः सन्ति। ते एव देवाः सर्वं मर्त्यं मरणधर्माणं देहं तद्वृत्तिश्च संसिच्य सम्यक्तया एकत्रीकृत्य पुरुषम् पुरुषोत्तमम् आविशन् प्रविशन्ति। लकारव्यत्ययः। ते एव ज्ञानिनः अमृतेन अमृतमयेन आत्मना विश्वा विश्वानि सर्वाणि दुरितानि पापानि साकं युगपदेव अन्तर्दधानाः अन्तरुन्धन्तः मृत्युसमये मृत्युं प्रत्यौहन् वशीकुर्वन्ति। यत् यदा त्रयः = इन्द्रियनियन्ता योगी, मनोनिरोधकः योगी, ब्रह्मरन्ध्रे प्राणस्थापकः योगी, एते त्रयः योगिनः सुपर्णाः सम्यक् ज्ञानिनः त्रिवृता त्रिविधप्राणबलैः "सर्वद्वाराणि संयम्य मनो हृदि निरुध्य आत्मनः प्राणं मूर्ध्नि आधाय, इति त्रिव्यवहारैः एकाक्षरम् एकं च तदक्षरञ्च" ब्रह्म यत् ओंपदवाच्यं तदेव एकाक्षरम् एकाक्षरं अभिसंभूय सम्प्राप्य आयन् मोक्षं प्राप्नुवन्ति ॥ ८ ॥

यथा कठो. अध्या. १ व. २ श्रु. १६ "एतद्ध्येवाक्षरं ब्रह्म ह्येतदेवाक्षरं परम्। एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्", तथा प्रश्नो. प्र. ५ श्रु. २ "ओं एतद्वै सत्यकाम! परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वान् एतेनैवायतनेनैकतरमन्वेति", तथा मुंडक. मुं. २ श्रु. ४ 
"ओं प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्", तथा छांदो. अध्या. १ ख. १ श्रु. १ "ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति", तथा तैत्तिरीय — "ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति ब्रह्मैवोपाप्नोति"

अनन्यचेता इति = हे अर्जुन! यः ब्रह्मवित् अनन्यचेताः नास्ति ब्रह्मातिरिक्ते पदार्थे चेतः मनो यस्य सः अनन्यचेताः नित्यशः सर्वदा सततम् अविरतं मां परमात्मानं स्मरति स्मरणं करोति। तस्य अनन्यचेतसः नित्ययुक्तस्य नित्यं समाधियुक्तस्य योगिनः ब्रह्मनिष्ठस्य यतेः अहं परमात्मा सुलभः सुखेन लब्धुं शक्यः अस्मि ॥१४॥

(मू. गी.) अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥

(वेदगी.) परिप्रयन्तं वय्यं सुषंसदं सोमं मनीषा अभ्यनूषत स्तुभः।
यो धारया मधुमाँ ऊर्मिणा दिव इयर्ति वाचं रयिषाळमर्त्यः॥
ऋ. अष्ट. ७ अध्या. २ व. २. मं. ८ (मं. ९ अनु. ४ सू. ६८ मं. ८)

परिप्रयन्तमिति = स्तुभः ब्रह्मस्तोतारः ज्ञानिनः "छन्दः, स्तुप्, रुद्रः — " स्तोतृनामसु पाठः (निघं. ३।१६) परिप्रयन्तं परितः प्रकर्षेण यन्तं गच्छन्तं सर्वव्यापकं वय्यं ज्ञानिभिः काम्यमानम् "वी गत्यादिषु" इत्यस्मात् वयन्ति "भय्यप्रवय्ये च छन्दसि" इति निपातितः, अत्राऽनुपसर्गस्यापि निपातनं भवति। सुषंसदं शोभनसदनं मुक्तिस्थानं सोमं परमात्मानं मनीषा सततं मनसः ईषा एकाग्रकर्त्री बुद्ध्या स्वामिन्या अनन्यचेतसा इति यावत् अभ्यनूषत अभिष्टुवन्ति। रयिषाट् अज्ञानधनाऽभिभविता अमर्त्यः मरणधर्मातीतः मधुमान् मधुरब्रह्मज्ञानोपेतः यः यतिः धारया धारयित्र्या धाराप्रवाहमय्या वा ऊर्मिणा नमस्कृत्या "ऊर्मिः ऊर्णोतेः। नौः प्रणेतव्या भवति नमतेर्वा" (निरु. ५।२३) दिवः प्रकाशमानस्य परमात्मनः वाचं स्तुतिवाणीं इयर्ति सदा प्रेरयति। ईश्वरं सदा स्मरतीत्यर्थः। ८॥

प्राप्नुवन्ति = महात्मानः ब्रह्मनिष्ठमनसः यतयः मां परमात्मानम् उपेत्य प्राप्य परमाम् अत्युत्कृष्टां संसिद्धिं विदेहमुक्तिं गताः प्राप्ताः अशाश्वतम् विनाशिनम् दुःखालयम् आध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकदुःखाश्रयं जन्म पुनः भूयः नाप्नुवन्ति न लभन्ते ॥ १५ ॥

(मू· गी·) मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥

(वेद गी·) ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम्।
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥२॥
साम· उत्तरार्चिका ५ प्रपा· १ अर्द्ध अध्या· ९ मं· २
ऋ· अष्ट· ७ अध्या· ४ व· ९ मं· १९ (मंड· ९ अनु· ५ सू· ९६ मं· १९)

ऋषिमना इति = यः मुमुक्षुः जनः ऋषिमनाः = ऋषीणां मन इव मनो यस्य, स ऋषिमनाः परमात्मनः मननकर्ता। ऋषिकृत् = ऋषीणां कृतं कर्म इव कृतं यस्य, स ऋषिकृत् ऋषिकर्मा। यद्वा ऋषिः तत्त्वदर्शी तम् आत्मानं करोति इति ऋषिकृत्। स्वर्षाः = शुभपदार्थद्रष्टा; सहस्रनीथः = सहस्रशः परमात्मनः स्तुतिकर्ता। नीथः स्तुतिः बहुविधस्तुतिकर्ता इत्यर्थः। कवीनां मेधाविनां पदवीः स्खलितानां पदानां सन्मार्गदर्शकः। महिषः पूज्यः सन् तृतीयं धाम कर्मबन्धनछेदनानन्तरं मुक्तिस्थानं सिषासन् साधयितुमिच्छन् विराजं विशेषेण राजन्तं परमात्मानं स्तुप् स्तुवन् अनुराजति परमात्मनः आनन्दम् अनुभवन् परमां संसिद्धिं गच्छतीति ॥ २ ॥

आब्रह्मेति = हे कौन्तेय! आब्रह्मभुवनात् मर्त्यलोकत आरभ्य ब्रह्मणो लोकपर्यन्तं सर्वे लोकाः सर्वे जीवाः पुनरावर्तिनः मर्त्यलोके पुनः जन्म गृह्णन्ति। हे अर्जुन! मां परमात्मानं तु उपेत्य प्राप्य पुनर्जन्म पुनर्देहप्राप्तिः न विद्यते ॥१६॥

(मू. गी.) आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।१६।

(वेद गी.) परमां तं परावतमिन्द्रो नुदतु वृत्रहा। यतो न पुनरायाति शश्वतीभ्यः समाभ्यः।२
अथ. कां. ६ अनु. ८ सू. ७५ मं. २ (यद्वा)

ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति।
तेषामज्यानिं यतमो वहाति तस्मै मा देवाः परिधत्तेह सर्वे ॥ अथ. कां. ६ अनु. ६ सू. ५५ मं. १

परमामिति = वृत्रहा वृत्रं पापं हन्तीति वृत्रहः पापनाशकः इन्द्रः परमात्मा परमां परावतम् अतिदूरस्थं ब्रह्मादिलोकतः परतरं तं स्वलोकं महं नुदतु प्रेरयतु। यतः यस्मात् लोकात् विदेहमुक्तः जनः शश्वतीभ्यः समाभ्यः बहुसंवत्सरकालात् अपि न पुनरायाति पुनर्नावर्तते ॥२॥ यद्वा

ये इति = देवयानाः देवैः विद्वद्भिः यानाः गन्तुं शक्याः ये पन्थानः मार्गाः बहवः कर्मणां अनुष्ठानात् ~~बैचित्र्यात्~~ ब्रह्मादिलोकप्राप्त्युपाय नानाविधाः सन्तः द्यावापृथिवी अन्तरा = द्यावापृथिव्योर्मध्ये संचरन्ति वर्तन्ते। तन्मध्ये तत्तत्कर्मकरणेन तत्तल्लोकं प्राप्नुवन्ति। तेषां ब्रह्मरुद्रादिलोकानां मध्ये यतमः यज्जातीयः लोकः अज्यानिं ज्यानिः हानिः तद्रहितां नित्यत्वं वहाति धारयति। हे सर्वे देवाः हे सर्वप्रकाशक परमात्मन्! तस्मै अविनश्वराय स्वलोकाय इह अस्मिन् जन्मनि एव अर्थात् विदेहमुक्तौ एव मा मां भक्तं परधत्त परियच्छत। मत्प्राप्त्यर्थं तं लोकं प्रापयतेत्यर्थः। देवयानाः = यातेः करणे ल्युट्। यतमः "वा बहूनां जातिपरिप्रश्ने" इति यच्छब्दात् डतमच्। वहाति = वहेर्लेटि आडागमः ॥१ तथा श्वेता. उ. अध्या. १ श्रु. १०, ११ तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः। ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः" तथा बृह. उप. अध्या. ६ ब्रा. २ श्रु. १५ "ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः" तथा च "वेदान्तदर्शने" अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्"

सहस्रेति=ते अहोरात्रविदो जनाः ब्राह्मदिनस्य ब्राह्मीरात्र्याश्च ज्ञातारः विद्वांसः सहस्रयुगपर्यन्तं सत्यत्रेताद्वापरकलियुगानां सहस्रसंख्याकानां चतुर्युगानां समाप्तिपर्यन्तं ब्रह्मणः अहः दिनं विदुः जानन्ति। सत्यादिचतुर्युगसंख्यावती तां रात्रिं तावन्मितां रात्रिं विदुः जानन्ति। अहरागमे ब्राह्मदिनागमे सर्वाः व्यक्तयः स्थावरजंगमादिकाः पिण्डाः अव्यक्तात् अव्यक्तस्वरूपात् ब्रह्मणः प्रभवन्ति उत्पद्यन्ते। रात्र्यागमे ब्राह्मीरात्र्यागमे सति तत्रैव अव्यक्तसंज्ञके स्वकारणस्वरूपे ब्रह्मणि एव प्रलीयन्ते अदर्शनं गच्छन्ति ॥ १७, १८

(मू. गी.) सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८

(वेद गी.) सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम्।

स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ॥ ३८

अथ. कां. १३ सू. २ मं. ३८

सहस्राह्ण्यमिति=अस्य हरेः "हरति पापानीति हरिः" तस्य हरेः पापहर्तुः हंसस्य सर्वप्राणिचित्तरूपाधिष्ठितस्य परमात्मनः पक्षौ अहः, निशा, इतिगतिशीलौ द्वौ पक्षौ सहस्राह्ण्यं सहस्रैः युगैः गमनयोग्यम् अहः दिनं तावद्भिः सहस्रयुगैः गमनयोग्या रात्रिः इति द्वौ पक्षौ^ स्वर्गं विस्तृताकाशभागं पततः गच्छतः। सः ~~परमात्मा~~ हिरण्यगर्भः सर्वान् सकलान् देवान् प्राणिनोऽप्राणिनश्च पदार्थान् उरसि स्वस्मिन् अव्यक्तरूपे गर्भे उपदद्य संधार्य्य विश्वा विश्वानि सर्वाणि भुवनानि लोकान् संपश्यन् अवलोकयन् याति विचरति ॥ ३८ ॥ तथा "प्रश्नोप. श्रु. ४ "ऊर्णनाभिर्यथा तंतून् सृजते संहरत्यपि। जाग्रत् स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः" मुंड. ख. श्रु. ७ "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। तथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्" तथा श्वेताश्व. उप. अध्या. ३ श्रु. ४ "देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु"

^ ~वियतौ विशेषनियमेन ~~बद्धौ~~ प्रसृतौ सन्तौ।

भूतग्राम इति = पूर्वकल्पे यः प्राणिवर्गः उत्पन्नः अभूत्। स एव अयं भूतग्रामः प्राणिवर्गः भूत्वा भूत्वा स्वकर्माऽनुसारेण जन्म गृहीत्वा अवशः परतंत्रः सन् राज्यागमे ब्राह्मीरात्र्यागमे प्रलीयते लयं प्राप्नोति। हे पार्थ! हे अर्जुन! अहरागमे ब्राह्मदिनागमे सति स एव प्राणिवर्गः प्रभवति उत्पद्यते ॥१९॥

(भू. गी.) भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
राज्यागमेऽवशः पार्थ! प्रभवत्यहरागमे ॥१९॥

(वेदगी.) अजाता आसन्नृतवोऽथो धाता बृहस्पतिः।
इन्द्राग्नी अश्विना तर्हि कं ते ज्येष्ठमुपासत ॥
अथ. कां. ११ अनु. ४ सू. ८ मं. ५
तपश्च वास्तां कर्म चान्तर्महत्यर्णवे। तपो ह जज्ञे कर्मणस्तत्
ज्येष्ठमुपासत ॥ अथ. कां. ११ अनु. ४ सू. ८ मं. ६

अजाता इति = ऋतवः वसन्तादिकालविशेषाः, तथा धाता, ब्रह्मा, विष्णुः। बृहस्पतिः जीवः, इन्द्रः सूर्यः, अग्निः वह्निः, अश्विना अश्विनौ अहोरात्रे सूर्याचन्द्रमसाविति एके (नि. १२।१) ब्राह्म्यां रात्रौ सत्यां अजाताः आसन् अनुत्पन्ना अभूवन्। तर्हि तस्मिन् प्रलयकाले ते स्वस्वकर्माधीनाः सन्तः कं ज्येष्ठं वृद्धतमं कं कारणभूतम् उपासत क्व विलीना आसते। महति प्रभूते अर्णवे प्रलयकालीने समुद्रे अन्तः मध्ये वसत् तपः स्रष्टव्यपर्यालोचनात्मकं यज्ज्ञानमयं तपः, कर्म प्राणिभिः अनुष्ठितं पुण्यापुण्यात्मकं सुखदुःख फलोन्मुखं परिपक्वं कर्म च आस्ताम् भवतः लकारव्यत्ययः। ब्राह्मदिनागमे सति तपः जगत्स्रष्टुः परमात्मनः भूतवर्ग-स्रष्टव्यपर्यालोचनात्मकः जगत्सिसृक्षात्मकः विचारः कर्मणः कल्पान्तरे प्राणिभिरनुष्ठितात् परिपक्वात् कर्मणः सकाशात् जज्ञे उदपद्यत। अतः ते ऋत्वादयः ज्येष्ठं वृद्धतमं सृष्टेः कारणभूतं परिपक्वं स्वकृतं ~~तत् कर्म~~ उपासत उपासते (~~सन्ते~~) तथा चोपनिषत् "गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" तत्
वासं कुर्वन्ति

पर इति= तस्मात् अव्यक्तात् सर्वपदार्थोत्पत्तिलयकारणस्वरूपात् अव्यक्तात् अन्यः भिन्नः भावः परमात्मा अव्यक्तः सर्वैः प्राणिभिः प्रमातुमशक्यः अप्रमेयः परः प्रकृष्टः सनातनः नित्यः यः अस्ति। सः अव्यक्तस्वरूपः परमात्मा सर्वभूतेषु सर्वेषु पदार्थमात्रेषु नश्यत्सु विनाशं गतेषु न विनश्यति कदाऽपि विनाशं न प्राप्नोति ॥ २० ॥

(मू. गी.) परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः।
यः सः सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

(वेदगी.) नाम नाम्ना जोहवीति पुरा सूर्यात् पुरोषसः। यदजः प्रथमं संबभूव
स ह तत् स्वराज्यमियाय यस्मान्नान्यत् परमस्ति भूतम् ॥ २१ ॥
अथ. कां. १०. सू. ७ मं. ३१

नामेति= ब्रह्मज्ञानी सूर्यात् पूर्वम् उषसः पुरा उषःकालादपि पूर्वं नाम नमस्करणीयं परमात्मानं नाम्ना ओंकारनाम्ना जोहवीति अतिशयेन आह्वयति। यत् परंब्रह्म प्रथमं सर्वेभ्यः पदार्थमात्रेभ्यः पूर्वं संबभूव विद्यमानम् आसीत्। स अजः अजन्मा परमात्मा एव संबभूव विद्यमानमभूत्। सः अव्यक्तात् कारणस्वरूपात् अव्यक्तात् परः अव्यक्तः स्वराज्यं स्वयंप्रकाशमानस्वरूपम् इयाय प्राप्नोति। यस्मात् अव्यक्तात् अनादिस्वरूपात् अन्यत् भिन्नं परंभूतम् अत्युत्तमपदार्थः न अस्ति न विद्यते ॥ ३१ ॥

अव्यक्त इति= यः अव्यक्तः कार्यकारणाद्व्यक्तस्वरूपात् भिन्नः अक्षरः अविनश्वरः इत्युक्तः। तम् अक्षरमेव परमाम् अत्युत्तमां गतिं तत्त्वं प्राप्तिस्थानम् सूरयः आहुः कथयन्ति। यम् अक्षरं परमात्मानं प्राप्य न निवर्तन्ते पुनः जगति जन्मग्रहणाय नायान्ति। तदेव अक्षरं पूर्णब्रह्म मम परमात्मनः परमम् अत्युत्कृष्टं धाम प्रकाशात्मकं मम स्थानम् अस्ति ॥ २१ ॥

(मू॰ गी॰) अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥२१॥
(वेदगी॰) तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥७॥
अथ॰ कां॰ ७ अनु॰ २ सू॰ २८ मं॰ ७ ऋ॰ अष्ट॰ २ अध्या॰ ७ व॰ २॰ मं॰ ७
साम उत्तरार्द्ध ८ प्र॰ अध्या॰ २ यजुः ६।५

तद्विष्णोरिति= सूरयः मेधाविनः विष्णोः सर्वव्यापकस्य परमात्मनः तत् प्रसिद्धं परमम् उत्कृष्टम् पदं पद्यते गम्यते इति पदं ज्ञानमयं स्थानम् दिवि द्युलोके चक्षुरिव सर्वेषां चक्षुःस्थानीयं सूर्यमण्डलमिव इह चक्षुः शब्देनोच्यते। चक्षुर्मित्रस्य वरुणस्याग्नेः इति ऋ॰ २।११५।१ आततं समन्तात् विस्तारितं सूर्यमण्डलमिव सर्वत्र प्रकाशस्वरूपं सदा सर्वदाकाले नित्यमेव पश्यन्ति अर्थात् कदाऽपि तत्परमपददर्शनाद्विरमन्ते भूयः भुविलोके न समागच्छन्तीतिभावः। सदा= सर्वैकान्ययेति पा॰ ५।३।१५ दा प्रत्ययः। सर्वस्य सोऽन्यतरस्याम् ५।३।६ पा॰ इति सर्वशब्दस्य सभावः। आततम् = तनोतेः कर्मणि क्तः " यस्य विभाषा ७।२।१५ इति इट् प्रतिषेधः। तथाच कठोप॰ अध्या॰ २ वल्ली॰ ६ श्रु॰ ८ "अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति," अन्यच्च "अन्यदेव तद्विदितादथो अविदितादधि" न तत्र चक्षुर्गच्छति न वाग्गच्छति न मनः"

पुरुषः इति = हे पार्थ! हे अर्जुन! सः परः पुरुषः पुरुषोत्तमः अनन्यया अव्यभिचारिण्या भक्त्या लभ्यः प्राप्य एव। भूतानि सर्वे पदार्थः यस्य पुरुषोत्तमस्य अन्तः मध्ये स्थितानि सन्ति। येन पुरुषोत्तमेन इदं सर्वं दृश्यमानं जगत् ततम् विस्तृतम् अस्ति २२

(मू-गी-) पुरुषः सः परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

(वेदगी-) अर्चा शक्राय शाकिने शचीवते शृण्वन्तमिन्द्रं महयन्नभिष्टुहि।
यो धृष्णुना शवसा रोदसी उभे वृषा वृषत्वा वृषभो न्यृञ्जते॥
ऋ- मंड-१ सू-५४ मं-२

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सहप्राणैश्च सर्वैः॥ मुण्ड-उप-मुं-२ खं-२ श्रु-५
"तत्सृष्ट्वा तदेवानुप्राविशत्। "सर्वस्य वशी सर्वस्येशानः सर्वाऽधिपतिः" बृह- ४।४।२२

अर्थ = हे जीवात्मन्! त्वं शक्राय पूर्णशक्तिमते शचीवते ज्ञानस्वरूपाय शाकिने कर्तुम्, अकर्तुम्, अन्यथाकर्तुम् इति गुणैः सर्वसमर्थाय परमात्मने (अर्चा) कायवाङ्मनोभिः अर्चां कुरु अथ च (शृण्वन्तम् = त्वया कृतां स्तुतिम् आकर्णयन्तम् इन्द्रम् परमैश्वर्यसम्पन्नं परमात्मानं महयन् श्रद्धाभक्त्या महत्वं गायन् पूजयन् वा त्वं (अभिष्टुहि) स्तुतिं कुरु यः परमात्मा धृष्णुना दुष्टानां धर्षकेण शवसा बले उभे रोदसी द्यावापृथिव्यौ न्यृञ्जते स्ववशी करुते। यथा वृषा बलवान् वृषभः पुरुषः वृषत्वा स्वबलेन निर्बलान् वशीकरुते। तथा "मुंडक-मुं-२ खं-२ श्रु-५" यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः" तथा च "तत्सृष्ट्वा तदेवानुप्राविशत्" तथा च बृह-उप-अध्या-४ ब्रा-४ श्रु-२२ "सर्वस्य वशी सर्वस्येशानः सर्वाऽधिपतिः"

यत्रेति = हे भरतर्षभ! हे अर्जुन! यत्र यस्मिन् काले योगिनः यतयः प्रयाताः मृताः अनावृत्तिं पुनरावृत्तिरहितां गतिम् आवृत्तिं पुनर्जन्मगतिं यान्ति प्राप्नुवन्ति तं कालं तं समयं वक्ष्यामि कथयिष्ये ॥ २३ ॥

(मू. गी.) यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

(वेदगी.) . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . . .

अग्निरिति = अग्निः उत्तरायणकालाभिमानी देवः, ज्योतिः ज्योतिः कालाऽभिमानी देवः। अहः दिनाभिमानी देवः, शुक्लः शुक्लपक्षाऽभिमानी देवः, षण्मासाः षण्मासाभिमानी देवः उत्तरायणम् उत्तरायणाऽभिमानी देवः। तत्र तस्मिन् उत्तरायणे प्रयाताः मृताः सन्तः ब्रह्मविदः ब्रह्मज्ञानिनः योगिनः ब्रह्म परमात्मानं गच्छन्ति प्राप्नुवन्ति ॥ २४॥

(भू. गी.) अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४

(वेदगी.) पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षात् दिवमारुहम्।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ॥ ६८
अथ. कां. ४ अनु. ३ सू. १४ मं. ३। यजुः १७।६८

पृथिव्या इति = अहं ब्रह्मवेत्ता पृथिव्याः मर्त्यलोकात् अग्निद्वारा (पार्थिवशरीरं त्यक्त्वा) अन्तरिक्षम् ज्योतिराश्रयमाकाशम् उदारुहम् = ऊर्ध्वक्रमेण अन्तरिक्षम् आरूढः। (ततः) अन्तरिक्षात् आकाशात् दिवं प्रकाशमानं सूर्यम् आ+अरुहम् आरूढः। दिवः प्रकाशमानस्य ~~[illegible]~~ नाकस्य सुखनिमित्तस्य पृष्ठात् सकाशात् अहं यथाक्रमम् उपरि गच्छन्नेव स्वरादित्यं ज्योतिः ज्योतिःस्वरूपं प्रकाशमानं परंब्रह्म अगाम् अगच्छम् ॥ ६८ ॥ येन मार्गेण भूयः संसारं न आगच्छति ॥ ६८ तथा च छान्दो. उप. प्रपा. ५ खं. १० श्रु. १, २ "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङेति मासांस्तान्। मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्यात् चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति एष देवयानः पन्था इति ॥

धूम इति= धूमः धूमाऽभिमानी देवः, यद्वा अज्ञानम्। रात्रिः रात्र्यभिमानी देवः यद्वा ज्ञानत्रस्तः। कृष्णः कृष्णपक्षाऽभिमानी देवः यद्वा पापकर्मविशिष्टः। षण्मासाः षण्मासाभिमानी देवः यद्वा षड्विधज्ञानरहितः। दक्षिणायनम् दक्षिणायनाभिमानी देवः यद्वा दक्षिणदिशाऽभिमुखत्वं केवलं कर्मकर्ता, तत्र अस्यामवस्थायां प्रयातः योगी कर्मयोगी चान्द्रमसं ज्योतिः चन्द्रसम्बन्धि इष्टापूर्तादि पुण्यकर्मसंभवं फलं प्राप्य अनुभूय निवर्तते पुनरेव मानवं लोकं प्राप्नोति ॥२५

(मू० गी०) धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥
(वेदगी०) कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।
ते आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते ॥
ऋ० अष्ट० २ अध्या० ३ व० २३ मं० ४६ (मं० १ अनु० २२ सू० १६४ मं० ४७)
अथ० कां० ६ अनु० ३ सू० २२ मं० १

कृष्णमिति= कृष्णं कृष्णपक्षः। नियानं नियमनं रात्रिः, अपः धूममयं कर्म। हरयः उदकस्य हर्तारः दक्षिणायनस्य षण्मासाः इत्यादिषु वसानाः वसन्तः प्रयाणं कुर्वन्तः सन्तः सुपर्णाः इष्टापूर्तादिकर्मसु पतन्तः कर्मयोगिनः दिवम् द्युलोकस्थं चान्द्रमसं ज्योतिः उत्पतन्ति ऊर्ध्वं गच्छन्ति। ते कर्मयोगिनः ऋतस्य कर्मफलस्य " ऋतं कर्मफलम्, ऋतं पिबन्तौ सुकृतस्य लोके" इति श्रुतेः। सदनात् स्थानात् चन्द्रमण्डलात् आववृत्रन् आवर्तन्ते अर्वाञ्च आगच्छन्ति। आत् अनन्तरं घृतेन कर्मयोगिनां कर्मजलेन पृथिवी पृथिव्यां पृथिवीलोके उत्पन्नं शरीरम् व्युद्यते विविधं क्रियते जन्मभिः आसिच्यते इति भावः ॥४६॥ तथा च छान्दो० उप० प्रपा० ५ खं० १० श्रु० ३, ४, ५
अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति ३ मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ४ तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते ॥ ४

शुक्लकृष्णे इति- शुक्लकृष्णे शुक्ला निर्मलस्वभावा, कृष्णा मलिनस्वभावा। एते गती मार्गौ जगतः ज्ञानकर्माधिकारिणः जनस्य शाश्वते स्वर्गलोकादिप्राप्तये मुक्तिप्राप्तये च नित्ये मते कथिते। एकया शुक्लगतया अनावृत्तिम् मुक्तिं याति प्राप्नोति। अन्यया अपरया कृष्णया कर्मगत्या पुनः वर्तते संसारे पुनर्जन्म प्राप्नोति ॥ २६ ॥

(मू· गी·) शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्यया वर्तते पुनः ॥२६

(वेद गी·) नाना चक्राते यम्या३ वपूंषि तयोरन्यद्रोचते कृष्णमन्यत्।
श्यावी च यदरुषी च स्वसारौ महद्देवानामसुरत्वमेकम् ॥११॥
ऋग्वेद अष्ट· ३ अध्या· ३ व· ३· मं· ११ (मंड· ३ अनु· ५ सू· ५५। मं· ११

नानेति- यम्या यमरूपे मिथुनभूते अहश्च रात्रिश्च ज्ञानकर्मणीति वा एते द्वे गती नाना नानाविधानि वपूंषि शुक्लकृष्णादीनि ज्ञानकर्मस्वरूपाणि मुक्तिपुनरावृत्तिमतिमयानि चक्राते कुरुतः। श्यावी कृष्णवर्णा कर्ममयी गतिः। अरुषी शुक्लतया रोचमाना ज्ञानस्वरूपेण भास्वती यत्- ये स्वसारौ सहगमनशीले भवतः। तयोर्मध्ये अन्यत् एकं कृष्णं संसारप्रापकं तमःस्वरूपं पुनर्जन्मप्रदात् अस्ति। अन्यत् शुक्लवर्णमयं ज्ञानं रोचते आभाति। सा शुक्ला गतिरेव देवानां प्रकाशमानानां ब्रह्मादिलोकानाम् उपरितनं महत् अत्युत्कृष्टम् एकम् मुख्यम् असुरत्वम् अस्यति क्षिपति दुष्टान् पापान् स्वस्मात् इति असुरः तस्य भावः असुरत्वं पदं प्रापयतीति शेषः ॥११।

नैते इति:- हे पार्थ! हे अर्जुन! कश्चन योगी योगसमाधिनिष्ठः एते शुक्लकृष्णे सृती पदव्यौ मार्गौ वा जानन् विदन् न मुह्यति मोहं न प्राप्नोति। हे अर्जुन! तस्मात् कारणात् त्वं सर्वेषु कालेषु आहारशयनादिसमयेषु योगयुक्तः ब्रह्मचिन्तनलग्नो भव॥ यद्वा "योगः कर्मसु कौशलम्", योगयुक्तः कर्मकरणे कुशलो भव॥२८॥

(मू. गी.) नैते सृती पार्थ! जानन् योगी मुह्यति कश्चन।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन॥२८॥

(वेदगी.) द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम्।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च॥१५
ऋ. अष्ट. ८ अध्या. ४ व. १२ मं. १५ (मंड. १० अनु. ८ सू. ८८ मं. १५)

द्वे इति:- अहं मुमुक्षुः योगी देवानां ज्ञानेन प्रकाशमानानां पितॄणां यथाशास्त्रं स्वनियमपालयितॄणां योगसमाधिनिष्ठानां यतीनाम् उत अपि मर्त्यानां पुनः पुनः मरणधर्मणां कर्मनिष्ठानां जनानां द्वे सृती द्वौ मार्गौ शुक्लकृष्णगतिकौ देवयानपितृयाणाख्यौ अशृणवम् अश्रौषम्। यत् इदं पदं पितरं पितृभूतं द्यां मातरं मातृभूतां पृथिवीं च अन्तरा मध्ये भवति। यत्पदं द्यावापृथिव्योर्मध्ये भवति। ताभ्यां पितृयानदेवयानमार्गाभ्यां तत् इदं विश्वं विश्वशब्देन जीवः उपलक्ष्यते। मुमुक्षुः जीवः एजत् एजन् मुक्तिमार्गं गच्छन् समेति समीचीनतया मुक्तिमार्गं गच्छति न च पुनरावृत्तिं गच्छतीति भावः॥१५

वेदेषु इति= वेदेषु साङ्गाधीतेषु ऋग्वेदादिषु, यज्ञेषु अग्निष्टोमादियागेषु तपःसु कृच्छ्रचान्द्रायणादिषु दानेषु गवादिदानेषु यत्पुण्यफलम् ऊर्ध्वलोकेषु भोक्तव्यं ध्रुवं शास्त्रेषु प्रदिष्टम् निर्दिष्टम्। योगी ब्रह्मवेत्ता इदं पर्यालोच्य परं ब्रह्म विदित्वा सम्यक् उपास्य तत्सर्वम् ऊर्ध्वलोकादिभोक्तव्यं ध्रुवम् अत्येति उल्लंघयति नाङ्गीकुरुते इति भावः। स एव योगी आद्यं सर्वकारणभूतं स्थानं सर्वाश्रयं परम् अक्षरम् ब्रह्म उपैति प्राप्नोति।२८॥ इतिश्री जगन्नाथशास्त्रि संकलिताायां गीतावेदार्थबोधिन्याम ष्टमोऽध्यायः समाप्तः ८

(मू. गी.) वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम्।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२८॥
इतिश्रीमद्भगवद्गीतासु — अष्टमोऽध्यायः समाप्तः।

(वेदगी.) स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥ यजुः १७।६८

स्वर्यन्त इति= ये यजमानाः कर्मठाः विश्वतोधारम्= "आहुतिदक्षिणान्नानि यज्ञस्य धारा उच्यन्ते। सर्वतः लोकं धारयितारं यज्ञं भिन्नभिन्नपुण्यफलप्रदं त् कर्म वितेनिरे वितन्वन्ति। सुविद्वांसः पूर्णज्ञानिनः ब्रह्मोपासकाः योगिनः यन्तः परंब्रह्म उपासनया अनन्यया भक्त्या अधिगच्छन्तः। स्वः स्वर्गलोकादिध्रुवं न अपेक्षन्ते नाऽभिलषन्ति अथ च ते एव योगिनः ब्रह्मवेत्तारः रोदसी जरामृत्युशोकादीनां रोध्री" रोदसी दिव एतद्विशेषणं न तु द्यावापृथिव्योरभिधानम्,, दिव इति स्वः शब्दोपादानसामर्थ्यात् द्यां ज्योतिःस्वरूपं परं ब्रह्म आरोहन्ति प्राप्नुवन्ति।६८॥ इतिश्री सारस्वतान्वयलैयाग्रामवास्तव्य न्यायभूषण जगन्नाथशास्त्रि ओ.टी. कृतायां वेदगीतार्थबोधिन्यामष्टमोऽध्यायः ॥६८॥

(अथ भगवद्गीता नवमोऽध्यायारंभः)

"यस्य निःश्वसितं वेदः यस्य गीतावचोऽमृतम् । तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युद्धर्णवम् ॥ १ ॥
"वेदो गीता तथा गीता वेद एव न संशयः । वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात् ॥ २ ॥ श्रीभगवानुवाच

इदमिति = इदं प्रत्यक्षनिर्दिष्टं गुह्यतमम् अतिशयेन गोप्यं राजविद्या सर्वासां विद्यानां राजा श्रेष्ठो भवत्यतः राजविद्या । यद्वा राजयति प्रकाशयति आत्मतत्त्वमिति राज्ञी, राज्ञी चासौ विद्या राजविद्या । राजगुह्यं राजा अतिरहस्यत्वेन गोपनीयत्वात् राजगुह्यं पवित्रं पुनातीति पवित्रम् इदं ब्रह्मज्ञानम् उत्तमं सर्वश्रेष्ठं प्रत्यक्षाऽवगमं प्रत्यक्षेण अवगम्यते यत् ज्ञानं तत्प्रत्यक्षाऽवगमम् धर्म्यं धर्माऽविरोधि सुसुखं कर्तुं सुसुखेन अनायासेन कर्तुं योग्यं सम्पादयितुं योग्यं विज्ञानसहितम् विज्ञानम् अपरोक्षाऽनुभवः तेन ज्ञानेन सहितं ज्ञानं साक्षान्मोक्षकारणम् अनसूयवे असूयादिदुर्गुणरहिताय ते तुभ्यं शिष्याय प्रवक्ष्यामि कथयामि विज्ञानसहितं यत् ज्ञानं ज्ञात्वा अवबुध्य अशुभात् संसारदुःखप्रवाहात् मोक्ष्यसे मुक्तिं प्राप्स्यसि ॥ १, २ ॥

श्रीभगवानुवाच

(मू० गी०) इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे । ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

(वेदगी०) गुहाहितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम् । उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण ॥ ऋ० अष्ट० २ अध्या० ६ व० ३ मं० ५ (मं० २ अनु० १ सू० ११ मं० ५)

गुहाहितमिति = हे शूर ! हे एकस्मात् देहात् अपरस्मिन् देहे गतिशील ! जीवात्मन् !! "शूरः शवतेर्गतिकर्मणः" (निरु० ४।१३) यतः त्वं वीर्येण स्वज्ञानसामर्थ्येन द्यां प्रकाशमानं परमात्मस्वरूपं तस्तभ्वांसं स्तम्भयन्तम् अहिम् असूयादिदुर्गुणं पापम् अहन् हतवान् असि । अतः गुहाहितं गुहायां बुद्धौ हितं स्थितं प्रत्यक्षस्थितं गुह्यं गोप्यं गूळ्हम् अतिशयेन गुह्यतमम् विज्ञानसहितं ज्ञानम् अप्सु अनन्यभक्तिकर्मसु अपीवृतं तिरोहितम् मायिनं माया ब्रह्मशक्तिः, तद्वन्तं परमात्मानं क्षियन्तम् वासयितृ विज्ञानसहितम् ज्ञानम् अपः = दत्पालय । यद्वा विज्ञानसहितं अपः ज्ञानं वक्ष्ये इति शेषः ॥ ५ ॥

"चतुर्दशानां विद्यानां धारणं हि यथार्थतः । विज्ञानमितरं विद्या येन धर्मो विवर्द्धते ।" तथा "तैत्ति० उप० अध्या० २ अनु० ५ "ओं विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते" तथा "श्वेता० उप० अध्या० ६ श्रु० २२, २३ "वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् । नाऽप्रशान्ताय दातव्यं नाऽपुत्रायाऽशिष्याय वा पुनः । यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" — कूर्मपुराणाऽध्या० १४

अश्रद्दधाना इति = हे परंतप! हे अर्जुन! अस्य पूर्वप्रतिपादितस्य धर्मस्य मोक्षहेतोः ज्ञानस्य अश्रद्दधानाः श्रत् सत्यं तद्दधातीति श्रद्धा शास्त्रप्रतिपादितफलप्राप्त्यास्थाविरहिताः दुष्कर्मीणः पुरुषाः माम् आनन्दैकरसम् परमात्मानम् अप्राप्य अलब्ध्वा मृत्युसंसारवर्त्मनि मृत्युभूयिष्ठः संसारो मृत्युसंसारः पुनः पुनः मनुष्यपश्वादिजन्म तदेव वर्त्म मार्गः तस्मिन्नेव निवर्तन्ते नितरां वर्तन्ते "जायन्ते म्रियन्ते" इति वर्त्म भवतीति भावः। ३"

(मू. गी.) अश्रद्दधानाः पुरुषा धर्मस्याऽस्य परंतप!।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥

(वेद गी.) यस्य क्रूरमभजन्त दुष्कृतोऽस्वप्नेन सुकृतः पुण्यमायुः।
स्वर्मदसि परमेण बन्धुना तप्यमानस्य मनसोऽधिजज्ञिषे ॥५॥
अथ. कां. १९ सू. ५६ मं. ५

यस्येति = दुष्कृतः दुष्कर्मकर्तारः धर्मस्य अश्रद्दधानाः पापभाजः पुरुषाः यस्य प्रमादमयस्य कर्मणः क्रूरं मृत्युसंसारवर्त्मात्मकं क्रूरं फलम् अभजन्त भुञ्जते। सुकृतः सुकर्माणः ज्ञानिनः पुरुषाः अस्वप्नेन धर्मे निद्रायाः अकरणेन हेतुना पुण्यं पुण्यमयं मुक्त्यात्मकम् आयुः अभजन्त भजन्ते। हे अश्रद्धे! यदा त्वं तप्यमानस्य तपस्यां कुर्वतः मुनेः मनसः अपि अधिजज्ञिषे स्वाऽधिकारं कुरुषे। तदा परमेण स्वोत्कृष्टतमेन बन्धुना बन्धनकर्त्री स्वरूपेण स्वः = सुखात्मकं प्रकाशस्वरूपं मदसि आह्लादयसि। "मदी हर्षग्लेपनयोः" ५॥ तथा कौषीतक्युप. अ. ४ श्रु. २० स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः"

मयेति = अव्यक्तमूर्तिना अप्रमेयस्वरूपेण मया परमात्मना इदं दृश्यमानं सर्वं जगत् स्थावरजंगमात्मकं जगत् ततं व्याप्तम्। एतत् सर्वं जगत् मया सर्वतो व्याप्य प्रकाश्यते। सर्वभूतानि सर्वाणि अव्यक्तादीनि स्थूलान्तानि भूतानि पदार्थाः मत्स्थानि मयि अव्यक्तमूर्तौ स्थितानि सन्ति। अहं परमात्मा बहिरन्तः परिपूर्णः सन् च तेषु पदार्थेषु विकारीव बिले सर्प इव प्रविश्य नैव तिष्ठामि। तानि भूतानि आश्रित्य न तिष्ठामीत्यर्थः ॥ ४ ॥

(मू. गी.) मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

(वेद गी.) स वेद पुत्रः पितरं स मातरं स सूनुर्भुवत् स भुवत् पुनर्मघः।
स द्यामौर्णोदन्तरिक्षं स्वः स इदं विश्वमभवत् स आभवत् ॥ २ ॥
अथ. कां. ७ सू. २ मं. २

स वेदेति = अनेन मंत्रेण सार्वात्म्यम् अभिधीयते। सः परमात्मा पुत्रः स्वीयं रूपं सम्यक् जानतः पुरुषान् अनर्थहेतोः संसारात् त्रायते इति पुत्रः संसाररक्षक इत्यर्थः। पुत्रः पुरु त्रायते (निरु. २।११) पितरं द्युलोकं वेद जानाति। सः परमात्मा मातरं पृथिवीं वेद जानाति। "द्यौः पिता पृथिवी माता" तै. ब्रा. ३।७।५।५ "ताभ्याम् इदं विश्वं एजत् समेति यदन्तरा पितरं मातरञ्च" ऋ. १०।८८।१५ इति श्रुतेः। द्यावापृथिव्योर्मध्ये विश्वस्याऽवस्थानात् तयोः प्राधान्येनाऽभिधानम्। अस्य विश्वस्य पिता सकलजगदधिष्ठानं परंब्रह्म। माता चित्प्रतिबिम्बिता मूलप्रकृतिः तौ परमात्मा स्वाऽभेदेन जानाति। स परमात्मा सूनुः सर्वस्य जगतः स्वस्वकर्मसु प्रेरयिता भुवत् भवति। "यं यं कामये तं तमुग्रं कृणोमि" ऋ. मं. सू. मं. "षु प्रेरणे" इत्यस्मात् औणादिको नुप्रत्ययः। भुवत् भवतेर्लेटि व्यत्ययेन शः "भूसुवोस्तिङि" इति गुणप्रतिषेधः। सः पुनः स च परमात्मा एव मघः कर्मफलम् अपि भुवत् भवति। अत्र धनवाचिना मघशब्देन कर्मफलं विवक्ष्यते। यद्वा "पुनर्मघ" इति समस्तं पदं भक्तेभ्यः बहुधनज्ञानप्रदानेऽपि पुनः पुनः परिपूर्णज्ञानधनत्वात् अभिवृद्धज्ञानधन इत्यर्थः। सः परमात्मैव द्याम् "द्यु अभिगमने" इत्यस्मादुत्पन्नः द्योशब्दः। सुकृतिभिः अभिगन्तव्यां दिवम् और्णोति स्वात्मना व्याप्नोति। स च अन्तरिक्षम् अन्तरा क्षान्तम् इत्यन्तरिक्षम् आकाशम् अपि और्णोति व्याप्नोति। स परमात्मा इदं परिदृश्यमानं नामरूपात्मकं विश्वं जगत् अभवत् विश्वात्मना स एव अवतिष्ठते। स च आभवत् आ सर्वतो व्याप्य वर्तते। आवृत्य आवृत्य तादृप्येण कारणात्मना वर्तते इतिभावः ॥ २ ॥ तथा हि उपनिषद् ... दं अभवत् यद्रूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति,"

ओ३म्

न चेति = हे अर्जुन! भूतानि कार्यभावमापन्नानि भूतजातानि मत्स्थानि मयि अव्यक्ते स्वरूपे स्थितानि न भवन्ति स्वकारणे तानि विद्यन्ते। मे मम ऐश्वरम् ईश्वरसम्बन्धिनं योगं युज्यते येगेन प्राप्यते इतियोगं स्वरूपं पश्य अवलोकय। मम मे आत्मा शुद्धः बुद्धः अव्यक्तस्वरूपः भूतभावनः भूतानि आकाशादीनि भावयति स्वसत्तया प्रकाशयतीति भूतभावनः सन् भूतभृत् भूतानि आकाशादिपृथिव्यन्तानि कार्यमात्राणि बिभर्ति दधातीति भूतभृत् भूत्वा न च भूतस्थः भूतेषु आत्मरूपेण अभिमानितया न तिष्ठामि।

(मू.गी.) न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥५॥

(वेदगी.) नाधृंष आदधृषते धृषाणो धृंषितः शवः।
पुरा यथा व्यथिः श्रव इन्द्रस्य नाधृंषे शवः॥२

अथ. कां. ६ अनु. ४ सू. ३३ मं. २

नाधृष इति = स च इन्द्रः अव्यक्तस्वरूपः परमात्मा नाधृषे नाधृष्यते ~~अन्य~~ कार्यान्तरमापन्नैः भूतैः नाभिभूयते अर्थात् भूताश्रये ब्रह्म न तिष्ठति। स च धृषाणः धृष्टः प्रगल्भः अन्येषामाधर्षणशीलः सन् धृषितः = धृषित इति कर्तरि निष्ठा लिङ्गप्रत्ययः धर्षकं शवः बलं सर्वस्वरूपाऽऽधायकत्वात् आदधृषते = अधर्षयति अभिभवति। कोऽप्यन्यः तस्य आधर्षकः नास्तीत्यर्थः। पुरा सृष्ट्यादौ व्यथिः पापनाशकारि श्रवः प्रशस्यं "श्रवश्श्रवा इति पशुमच्च पृथम्" (निरु. ४।२४) श्रूयमाणं वा इन्द्रस्य परमात्मनः शवः भूतभावनबलं यथा येन केन प्रकारेण नाधृषे अन्यैर्नाधृष्यते। अन्यानि भूतानि तं परमात्मानम् अभिभवितुम् न शक्नुवन्ति॥ २॥

यथेति = आकाशस्थितः आकाशे तिष्ठतीति आकाशस्थितः वायुः यथा येन प्रकारेण सर्वत्रगः सर्वत्र सर्वेषु स्थानेषु गच्छति चेष्टते इति सर्वत्रगः नित्यं सदा महान् महत्परिणामवान् भवति। तथा तेनैव प्रकारेण सर्वाणि समस्तानि भूतानि महदादि स्थूलान्तानि मत्स्थानि मयि परिपूर्णे ब्रह्मणि तिष्ठन्ति इति मत्स्थानि इत्येवम् उपधारय निश्चिनुहि ॥ ६ ॥

(मू॰ गी॰) यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥
(वेद गी॰) वायोः सवितुर्विदथानि मन्महे यावात्मन्वद् विशथो यौ च
रक्षथः। यौ विश्वस्य परिभू बभूवथुस्तौ नो मुञ्चतमंहसः ॥ १ ॥
वेद अथ॰ कां॰ ४ सू॰ २५ मं॰ १

गुरुः शिष्यमुपदिशति हे शिष्य!
वायोरिति = हे परमात्मन्! वायोः आकाशस्थितस्य महतः सर्वत्रगस्य पवनस्य इव सवितुः जगदुत्पादकस्य तव परमात्मनः विदथानि वेदितव्यान् गुणान् मन्महे वयं मननं कुर्मः। यौ लोके वायुः, ब्रह्माण्डे च परमात्मा आत्मन्वत् आत्मयुतं स्थावरजंगमात्मकं जगत् विशथः महत्परिमाणवन्तौ प्रविष्टौ वसतः। रक्षथः च परिपालयतः। यौ यः परमात्मा वायुश्च विश्वस्य समस्तसंसारे परिभू [illegible] सर्वत्रव्यापकः बभूवथुः भवतः। "वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बहिश्च—,,
क॰ उ॰
तौ युवां परमात्मा वायुश्च अंहसः पापात् मलिनता मुञ्चतम् दूरीकुरुताम् ॥ १ ॥

सर्वभूतानीति = हे कौन्तेय! हे अर्जुन! कल्पक्षये ब्रह्मकल्पे क्षये सति अहं सर्वभूतानि सर्वाणि स्थावरजंगमात्मकानि भूतानि मामिकां मदीयाम् अपराख्याम् प्रकृतिं त्रिगुणात्मिकां मायां यान्ति प्राप्नुवन्ति। अहं परमात्मा तानि सर्वाणि भूतानि कल्पादौ ब्रह्मकल्पारंभे विसृजामि उत्पादयामि।७॥

(मू. गी.) सर्वभूतानि कौन्तेय! प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥७॥

(वेदगी.) य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश॥१॥

ऋ. अष्ट. ८ अध्या. ३ व. १६ मं. १ (मंड. १० अनु. ६ सू. ८१ मं. १) यजुः १७।१७
तै. सं. ४, ६, २, १

य इति = यः विश्वकर्मा विश्वं कर्म यस्य सः विश्वकर्मा परमात्मा ऋषिः सर्वद्रष्टा सर्वज्ञः इमा इमानि विश्वा विश्वानि भुवनानि भूतजातानि जुह्वत् कल्पक्षये पृथिव्यादीन् इमान् सप्तलोकान् स्वात्मनि जुह्वत् आददानः संहरन् वा होता संसाररूपस्य होमस्य कर्ता, यद्वा संसारं जिघृक्षुः नः अस्माकं प्राण्यप्राणिनां पिता पाता पालकः जनको वा न्यसीदत् निषसाद स्वयं तिष्ठति। अयमर्थः प्रलयकाले प्राप्ते सति सर्वान् लोकान् संहृत्य अस्माकमपि संहर्ता पुनश्च स्रष्टा सन् सर्वज्ञो यः परमेश्वरः स्वयमेक एवासीत्। स एव परमेश्वरः आशिषा "एकोऽहं बहु स्यां प्रजायेय" इत्येवंरूपया पुनः पुनः सिसृक्षया द्रविणं द्रविणोपलक्षितं जगद्भोगम् इच्छमानः आकांक्षमाणः प्रथमच्छत् प्रथमं मुख्यं निष्प्रपञ्चं पारमार्थिकं रूपम् आवृण्वन् अवरान् स्वसृष्टान् द्विपच्चतुष्पदस्थावरादीन् आविवेश आविष्टवान्। "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्युपनिषत्॥१॥ ७॥ एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्" माण्डू. श्लो. ६
~~यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म" तैत्तिरीयोप. ३।१~~
"एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः। भूयः सृष्ट्वा यतयः! तथेशः सर्वाधिपत्यं कुरुते महात्मा" श्वेताश्वतरोप. ५।३ "जन्माद्यस्य यतः" वेदा. द. १।१।२

प्रकृतिमिति = अहं परमेश्वरः स्वां स्वकीयां प्रकृतिं भूम्याद्यष्टविधां प्रकृतिम् अवष्टभ्य स्वायत्तीकृत्य प्रकृतेः भिन्नभिन्नकर्मस्वभावस्य वशात् हेतोः अवशं परतंत्रम् इमं परिदृश्यमानं मनुष्यपश्वादिलक्षणं भूतग्रामं प्राणिवर्गं पुनः पुनः भूयः भूयः विसृजामि रचयामि । ८ ॥

(मू· गी·) प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥
(वेद गी·) यन्मन्युर्जायामवहत् संकल्पस्य गृहादधि ।
क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत् ॥ १ ॥
अथ· कां· ११ सू· ८ मं· १

यन्मन्युरिति = यत् यदा मन्युः "मन्यते" सर्वं जानातीति मन्युः निरावरणज्ञानः परमेश्वरः "मन्युर्भगो मन्युरेवास देवो मन्युर्होता वरुणो विश्ववेदाः" (तै· ब्रा· २।४।१।११) मन ज्ञाने औणादिको युप्रत्ययः । संकल्पस्य वासनायाः "एकोऽहं बहु स्याम" गृहात् अधि गृहणसामर्थ्यात् जायां "जायतेऽस्यां सर्वं जगत्" इति जाया सिसृक्षाऽवस्थापन्ना भूम्याद्यष्टविधा प्रकृतिः तां प्रकृतिम् अवहत् अवष्टभ्यति । सृष्ट्यवष्टम्भनसमये के जन्याः सृष्ट्युत्पत्तौ कारणानि आसन् अभवन् । "तपश्चैवास्तां कर्म" अथ· कां· ११।८।२ । तदानीं प्राणिनां पूर्वकल्पे कृतानि कर्माण्येव सृष्ट्युत्पत्तौ कारणानि अभवन् । के वराः के वरणीयाः स्वस्वदेहैः वरणीया आसन् । क उ ज्येष्ठवरः अभवत् । ज्येष्ठेषु वरः ज्येष्ठवरः सर्वेभ्यः श्रेष्ठतरः कः अभवत् कः भवति । "ब्रह्म ज्येष्ठवरोऽभवत्" अथ· कां·

न चेति-हे धनञ्जय! हे अर्जुन! तानि भूतसृष्ट्यादीनि कर्माणि उदासीनवत् आसीनम् तूष्णीं तिष्ठन्तम् तेषु कर्मसु* असक्तं संगरहितं मां परमात्मानं न निबध्नन्ति मम बन्धाय न भवन्ति।

* सृष्टिसंहारादि कर्मसु।

(मू॰ गी॰) न च मां तानि कर्माणि निबध्नन्ति धनञ्जय।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९॥

(वेद गी॰) इन्द्र ओषधीरसनोदहानि वनस्पतींरसनोदन्तरिक्षम्।
बिभेद वलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनाम् ॥ १०
अथ॰ कां॰ २॰ सू॰ ११ मं॰ १०

इन्द्र इति=इन्द्रः ऐश्वर्यवान् परमात्मा ओषधीः तृणगुल्मादीन् पदार्थान् प्राणिनामुपभोगार्थम् असनोत् प्रादात् ते पदार्थाः तद्बन्धनाय नालम्। स च अहानि प्राणिनां स्वस्व कार्यसाधनाय दिवसान् आयुः परिकृत्यर्थं च असनोत् प्रायच्छत। न तु स्वायुपरिकृत्यर्थम्। स परमेश्वरः वनस्पतीन् यज्ञार्थं खदिरपलाशादिवृक्षान् ~~असनोत् प्रददाति~~ "अग्निं वा" यथाह यास्कः= "तत्को वनस्पतिः। यूप इति कात्थक्यः। अग्निरिति शाकपूणिः निरु॰ ८।१७। स परमेश्वरः अन्तरिक्षम् सर्वप्राण्यप्राणिवासार्थम् आकाशं प्रायच्छत। स परमेश्वरः बलं संव्रियते आत्माऽनेनेति बलम् अज्ञानम् आत्माऽऽवरकम् अज्ञानं बिभेद भिनत्ति। विवाचः= विरुद्धवाचः भक्तप्रतिकूलान् आचरणान् नुनुदे। भक्तरक्षार्थं बाधते। यद्वा विवाचः विविधा वेदवाणीः नुनुदे प्रेरयति। अथ अनन्तरम् अभिक्रतूनां क्रतुः कर्म आभिमुख्येन युद्धार्थं कर्म येषां ते अभिक्रतवः बलीयांसः शत्रवः तेषामपि दमिता उपशमयिता अभवत् भवति। एवं परमात्मा सृष्ट्यादिविधानेन हितकरणाहितपरिहाराभ्यां सर्वाः प्रजाः पालयति न तु तत्र स्वासक्तिं विधत्ते इति भावः। असनोत्= षणु दाने इत्यस्य लङि रूपम्। वनस्पतीन्= पारस्करप्रभृतित्वात् सुडागमः। बिभेद= भिदिर् विदारणे इत्यस्य लिटि रूपम्। नुनुदे= णुद् प्रेरणे इत्यस्य लिटि रूपम्। दमिता= दमु उपशमे इत्य~~[illegible]~~ तृचि रूपम् ॥१०॥

मयेति= हे कौन्तेय! हे अर्जुन! अध्यक्षेण साक्षिस्वरूपेण स्वामिस्वरूपेण वा मया प्रकृतिः भूम्याद्यष्टविधाऽपरा प्रकृतिः सचराचरं स्थावरजंगमसहितं जगत् सूयते जनयति। अनेन हेतुना अनेन प्रकारेण जगत् विपरिवर्तते सर्वतः चेष्टते ॥१०॥

(मू० गी०) मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनाऽनेन कौन्तेय! जगद्विपरिवर्तते ॥१०॥

(वेद गी०) इ॒यं पि॒त्र्या रा॒ष्ट्र्ये॒त्वग्रे॑ प्रथ॒माय॑ ज॒नुषे॑ भुवने॒ष्ठाः।
तस्मा॑ ए॒तं सु॒रुचं॑ ह्वा॒रम॑ह्यं घ॒र्मं श्री॑णन्तु प्रथ॒माय॑ धा॒स्यवे॑ ॥२॥
अथ० कां० ४ सू० १ मं० २

इयमिति= पित्र्या पालकेन सर्वाऽध्यक्षेण परमात्मना इयं राष्ट्री संसारराष्ट्रस्वामिनी प्रकृतिः भुवनेष्ठाः सचराचरे भुवने स्वसर्जनशक्त्या तिष्ठतीति भुवनेष्ठाः इती प्रथमाय प्रारम्भिकाय जनुषे संसारोत्पत्तये अग्रे सृष्ट्यारंभे एतु कार्यरूपतामापद्यते। तस्मै प्रकृत्यध्यक्षाय प्रथमाय अनादिने धास्यवे सर्वजगद्धारकाय सर्वपोषकाय सुरुचं सुष्ठुरुचिकरं ह्वारम् मानसिकसद्विचारा ह्वातारम् अह्यं प्रात्यहिकं घर्मं पूजायज्ञं श्रीणन्तु सर्वे योगिनः परिपक्वं विदधतु ॥२॥

अह्यम्= हीनतारहितम्

अवजानन्तीति= मोघाशाः मोघा निष्फला आशा मनोरथा येषां ते मोघाशाः निष्फलमनोरथाः। मोघकर्माणः मोघानि निष्फलानि कर्माणि येषां ते मोघकर्माणः निष्फलकर्माणः। मोघज्ञानाः मोघं निष्फलं ज्ञानं सकलशास्त्राऽध्ययनजन्यं येषां ते मोघज्ञानाः। विचेतसः विपरीतबुद्धयः राक्षसीं क्रूरताहिंसादिगुणप्रधानां राजसीं प्रकृतिम् अपञ्च आसुरीं दुष्टां प्रकृतिं मोहिनीं मोहसंपादिनीं प्रकृतिं स्वभावम् आश्रिताः प्राप्ताः सन्तः मूढाः मूर्खाः मम परमेश्वरस्य भूतमहेश्वरं भूतेषु महत्तमम् परम् अत्युत्कृष्टम् भावं स्वरूपम् अजानन्तः अविदितवन्तः मानुषीं मनुष्यसम्बन्धिनीं तनुं शरीरम् आश्रितं प्राप्तं मां कृष्णं परमात्मानम् अवजानन्ति तिरस्कुर्वन्ति ॥११।१२॥

(भू.गी.) अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम् ॥११
मोघाशा मोघकर्माणः मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२
(वे.गी.) ईं श्रृणोत्युक्तम्। अमन्तवो मान्त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥४
तां मायामसुरा उपजीवन्त्युपजीवनीयो भवति य एवं वेद ॥४
अथ. कां. ४ अनु. ६ सू. ३ मं. ४। अथ. कां. ८ अनु. ५ सू. १३ मं. ४

ईमिति= यः प्राणी अन्नं भोज्यं पदार्थम् अत्ति भक्षयति। यः प्राणी विपश्यति आलोकयति। यः प्राणी प्राणिति श्वासोच्छ्वासादिव्यापारं करोति। यः प्राणी उक्तं कथितं वचनं शृणोति श्रवणं करोति। एवंविधमन्तर्यामिरूपेण स्थितं मां ये न जानन्ति ते मूढाः आसुरीं प्रकृतिम् आश्रिताः निष्फलज्ञानाः सन्तः अमन्तवः मद्विषयज्ञानरहिता मद्भूतम् ऐश्वरं भावम् अमन्यमानाः अजानन्तः माम् उपक्षियन्ति मां क्षीणं कुर्वन्ति मानुषीं तनुम् आश्रितं माम् अवजानन्ति। तां मायां मिथ्याबुद्धिहेतुम् अज्ञानम् असुराः असुरताः सुष्ठु प्रज्ञामरहिताः ब्रह्मज्ञानस्थानपरिभ्रष्टाः मूर्खा जनाः। यथा यास्क आह "असुरा असुरताः स्थानेष्वस्ताः स्थानेभ्य इति वा सोऽदेवानसृजत् तत् सुराणां सुरत्वम्। असोरसुरानसृजत् तदसुराणामसुरत्वम्" इति ब्राह्मणम् (नि. ३।८) उपजीवन्ति उपाश्रित्य प्राणं धारयन्ति। उपजीवनीयो देहाश्रितज्ञानाश्रितः स भवति, न परमात्मज्ञानाश्रितः भवति। हे श्रुत! हे श्रवणकर्तः! विद्वन्! श्रुधि मया वक्ष्यमाणं वचनं शृणु। ते तुभ्यं श्रद्धिवं श्रद्धिः श्रद्धा तया युक्तं श्रद्धयत्नेन लभ्यमित्यर्थः। वदामि उपदिशामि। शृणोति। श्रु श्रवणे श्रुवः शृ चेति= श्रु धातोः शृभावः। अमन्तवः= मनेः औणादिकः तु प्रत्ययः। यद्वा भावे तुप्रत्ययः। श्रुधि= श्रान्तसेविकरणस्य लुक्। श्रुशृणु पृकृवृभ्यः इति हेर्धिभावः। श्रद्धिवम्= श्रदन्तोरुपसर्गवद् वृत्तिर्वक्तव्या इति श्रच्छब्दस्य उपसर्गवद्भावे ते मन्तव्याते उपसर्गे घोः किरिति किप्रत्ययः मत्वर्थीयो वा ॥४॥

महात्मान इति= हे पार्थ! हे अर्जुन! महात्मानः महान् उत्कृष्ट आत्मा मनो येषां ते महात्मानः यतयः दैवीं परमात्मसम्बन्धिनीं प्रकृतिं संपत्तिम् आश्रिताः प्राप्ताः सन्तः भूतादिं प्राणिमात्राणाम् आदिभूतम् अव्ययं विनाशरहितं मां परमात्मानं ज्ञात्वाऽवबुध्य अनन्यमनसः नास्ति अन्यस्मिन् वस्तुनि मनो येषां तेऽनन्यमनसः अनन्यहृदयाः सन्तः मां परमात्मानमेव भजन्ति सेवन्ते ॥ १३॥

(मू॰ गी॰) महात्मानस्तु मां पार्थ! दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३॥
(वेदगी॰) कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः।
इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ १६॥
ऋ॰ अष्ट॰ ५ अध्या॰ ७ व॰ २८ मं॰ १६ (मं॰ ८ अनु॰ १ सू॰ ३ मं॰ १६) अथ॰ कां॰ २॰ सू॰ १॰ मं॰ २

कण्वा इति= प्रियमेधासः प्रिया मेधा येषां ते प्रियमेधासः प्रियप्रज्ञाः आयवः मनुष्याः "आयुः मनुष्यः" यथा यास्कः "आयोरयनस्य मनुष्यस्य (नि॰ १०।४१) कण्वा इव कणन्ति स्तुवन्ति स्तुतिं रचयन्ति ते कण्वाः यद्वा कणन्ति परमात्मानं लक्षीकृत्य यवहारेषु गच्छन्ति इति कण्वाः। कणतिर्गतिकर्मा, यद्वा कण निमीलने अस्मात् क्वन् प्रत्ययः। बाह्येन्द्रियाणि निमील्य ध्यानकर्तारः ईश्वरोपासकाः। कण्वस्य मेधाविनामसु पाठः (निघं॰ ३।१५) भृगवः तेजस्विनः तपस्विनः वा "भृज्जन्ति तपश्चर्यादिषु ये परिपक्वप्रज्ञाः भवन्ति ते भृगवस्तपस्विनः दैवीं प्रकृतिम् आश्रिताः सन्तः। भृगवः= भ्रस्ज पाके इत्यत उः सम्प्रसारणं सलोपश्च। सूर्या इव सूर्यवत्तेजस्विनः महात्मानः सन्तः धीतं सर्वैः आध्यातं विश्वमित् व्याप्तमेव परमात्मानम् आनशुः अश्नुवन्ति। सर्वदा तस्मिन् अनन्यमनसा लीनाः तिष्ठन्ति। एवंभूता अनन्यमनसस्ते एव यतयः इन्द्रं परमात्मानं महयन्तः पूजयन्तः सन्तः स्तोमेभिः स्तोत्रैः अस्वरन् उच्चैः स्वरन्ति उच्चैः गायन्ति। स्वृ शब्दोपतापयोः भौवादिकः ॥ १६ ॥

सततमिति=दृढव्रताः दृढं विच्छेदरहितं ज्ञानसमाधिलक्षणं व्रतं नियमो येषां ते दृढव्रताः, सततं नित्यं मां परमात्मानं कीर्तयन्तः कीर्तनं कुर्वन्तः यतन्तः मत्प्राप्तये यत्नं कुर्वन्तः सन्तः भक्त्या परभक्त्या मां परमात्मानमेव नमस्यन्तः नमस्कारं कुर्वन्तः नित्ययुक्ताः नित्यसमाधिनियमोपेताः सन्तः भक्ताः माम् उपासन्ते सेवन्ते। यद्वा नित्ययुक्ताः नित्यो मोक्षः तत्सिद्धये युक्ताः नियता उपासते उपासनां कुर्वन्ति ।१४ ॥

(मू. गी.) सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

(वेदगी.) सुकर्माणः सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः।
शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन् ॥१८॥
ऋ. अष्ट. ३ अध्या. ४ व. १९ मं. १८ (मं. ४ अनु. १ सू. २ मं. १८) अथ. कां. १८ सू. ३ मं. २२

सुकर्माण इति= सुकर्माणः सुष्ठु ज्ञानादिलक्षणं कर्म येषां ते सुकर्माणः शोभनज्ञानवन्तः। सुरुचः सुष्ठु रुक् ब्रह्मकीर्तने प्रीतिः येषां ते सुरुचः शोभनप्रीतयः शोभनप्रवृत्तयो वा। देवयन्तः देवं परमात्मानं कामयमानाः परमात्मोपासका ईश्वरभक्ता इत्यर्थः। देवाः ईश्वरभक्त्या देदीप्यमानाः यतयः अयः न= यथा लोहकाराः अयः लोहं भस्त्रेण धमन्ति, तद्वत् जनिम स्वकीयं मानुषं जन्म धमन्तः भक्त्या निर्मलीकुर्वन्तः। अग्निम् अग्निवत्प्रकाशस्वरूपं ज्ञानमयम् आत्मानं शुचन्तः प्रदीपयन्तः इन्द्रं परमैश्वर्यवन्तं परमात्मानं ववृधन्तः स्तुत्या वर्धयन्तः सन्तः, परिषदन्तः नित्ययोगसमाधिना परितः सीदन्तः ऊर्वं महतो महान्तं गव्यं गोमयं वाङ्मयं परंब्रह्म अग्मन् गच्छन्ति उपासते इत्यर्थः। धमन्तः= ध्मा शब्दाग्निसंयोगयोः। शतरि "पाघ्राध्मा— "इत्यादिना धमादेशः। ववृधन्तः= वृधु वर्धने व्यत्ययेन परस्मैपदम्। शतरि शपः श्लुः। अग्मन्= गमेर्लुङि च्लेर्लुकि रूपम् ॥१८॥

ज्ञानयज्ञेनेति= इज्यते पूज्यतेऽनेनेति यज्ञः ज्ञानं ब्रह्मात्मैकत्वविषयं ज्ञानमेव यज्ञः ज्ञानयज्ञः, तेन ज्ञानयज्ञेन। अन्ये केचित् यतयः एकत्वेन अभेदोपासनया यजन्तः पूजयन्तः मां परमात्मानम् उपासते उपासनां कुर्वन्ति। अपि शब्देन कर्मिणः गृह्यन्ते। कर्मयज्ञोपासकाः कर्मिणः पृथक्त्वेन भेदेन विश्वतोमुखं सर्वात्मकं मां परमात्मानम् बहुधा अनेकप्रकारेण उपासते सेवन्ते १५

(मू॰ गी॰) ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥

(वेदगी॰) ईजे यज्ञेभिः शशमे शमीभिः ऋधद्वारायाग्नये ददाश।
एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः॥ २॥
ऋ॰ अष्ट॰ ४ अध्या॰ ५ व॰ ३ मं॰ २ (मं॰ ६ अनु॰ १ सू॰ ३ मं॰ २)

ईजे= यः यजमानः यतिः ऋधद्वाराय ऋधत् समृद्धं वारं वरणीयं तेजः स्वरूपं यस्य तादृशाय अग्नये सर्वव्यापकाय परमात्मने ददाश भक्त्या स्वमनः अर्पयति। स यजमानः ब्रह्मविद् यतिः यज्ञेभिः अभेदोपासनामयेन ज्ञानयज्ञेन ईजे इष्टवान् भवति। तथा शमीभिः कर्मयज्ञोपासनामयैः बहुविधकर्मभिः कर्मयज्ञोपासकः शशमे शान्तश्च भवति, कर्मयोगेनाऽपि सर्वं फलं लभते। एव चन= अपि च तं यजमानम् एकत्वोपासकं ज्ञानिनं पृथक्त्वोपासकं कर्मिणं वा यशसाम् अजुष्टिः यशोऽलब्धिः न नशते ~~नैव प्राप्नोति~~, किन्तु यशोलब्धिः भवति। तथा तं मर्तं मनुष्यम् अंहः अनात्मज्ञानोद्भूतं पापं न नशते न प्राप्नोति। तथा प्रदृप्तिः अनर्थहेतुः प्रकृष्टः दर्पः अभिमानः न नशते न प्राप्नोति ॥ २ ॥

अहमिति = क्रतुः श्रौतकल्पः अहम् । यज्ञः उपासनादिकर्म अहम् । स्वधा पितृभ्यः पार्वणश्राद्धादौ स्वधाशब्दितः अहमेव । औषधं व्रीह्यादिकम् अप्यहमेव । येन देवपितृभ्यः स्वाहास्वधान्तेन हविर्दीयते स मंत्रः अहमेव । आज्यं घृतचरुपुरोडाशादिकम् अहमेव । अग्निः अपि अहमेवाऽस्मि । हुतं हवनक्रियाऽपि अहमेवाऽस्मि ।१६ ॥

(मू. गी.) अहं क्रतुरहं यज्ञः स्वधाऽहमौषधम् ।
मंत्रोऽहमेवाज्यमहमग्निरहं हुतम् ॥१६

(वेदगी.) अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ।८॥
ऋ. अष्ट. ३ अध्या. १ व. २८ मं. ८ (मं. ३ अनु. २ सू. २६ मं. ८)
साम. अध्या. ६ खं. ३८ ॥ यजुः १८।६६ ।

अग्निरिति = अहं परमात्मा अग्निः अस्मि देवानां हविः प्रापणादंगनादिगुणयुक्तोऽस्मि । अहं जन्मना स्वप्रकाशरूपेनैव जातवेदाः जातं जातं कर्म वेत्तीति जातवेदाः क्रतुः अप्यहमस्मि । "जातवेदाः कस्मात् जातानि वेद जानाति वैनं विदुः जाते जाते विद्यते इतिवा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यज्जातः पशून् विन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम् (नि. ७।१९) जातं सर्वं स्वात्मरूपतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः । अतः घृतम् आज्यं मे मम परमेश्वरस्य चक्षुः चक्षुःस्थानीयं । यथा लोके चक्षुर्भासकम् । एवं घृतं मयि प्रक्षिप्तं ज्वालामुत्पादयत् भासकमस्ति । अमृतम् अमृतमयम् औषधम् मे मम परमेश्वरस्य आसन् आस्ये वर्तते अर्थात् औषधमप्यहमेवाऽस्मि । अर्कः अर्चनीयः यज्ञः नाम नाम्नाऽस्मि । त्रिधातुः त्रयः ऋग्यजुःसामानि धातवः जगद्धारकाः मंत्राः यस्मिन् स त्रिधातुः ऋग्यजुःसाममंत्रः अहमेवाऽस्मि । रजसः पितृलोकस्य विमानः स्वधाशब्दविशेषेण निर्माताऽस्मि अर्थात् पार्वणश्राद्धादौ स्वधाशब्दितोऽप्यहमेव अजस्रः अनुपक्षीणः घर्मः प्रदीप्तः सूर्योऽप्यहमेवाऽस्मि । हविः होतव्यं द्रव्यं हुतञ्च सर्वमेवाऽहमस्मि । चक्षुः = चक्षिङ् व्यक्तायां वाचि उसन्नित्यनुवर्तौ चक्षेः शिच्चेत्युसुन् शिद्वद्भावात् ख्याञादेशाऽभावः । आसन् = आस्यशब्दस्य = पद्नो —,, आसन्नादेशः सुपां सुलुक् —,, इति सप्तम्याः लुक् । विमानः = मांङ् माने "कृत्यलुटो बहुलम् ,, इति ल्युट् । अजस्रः = जसु मोक्षणे नञ्पूर्वः "नमिकंपि — रः ,, इति ताच्छीलको रप्रत्ययः । नञ्पूर्वो जसिर्नैरन्तर्ये वर्तते । चक्षु ,, ॥ ८ "यथा चोपनिषदि" अन्नाद्धि खल्विमानि भूतानि जायन्ते अन्नेन जातानि जीवन्ति अन्नं प्रयन्त्यभिसंविशन्ति ,, तथा प्रश्नो प. प्र. १ मं. १४ "अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मात् इमाः प्रजाः प्रजायन्ते इति...

पितेति = अस्य जगतः संसारस्य पिता आदिकारणम् अहमस्मि। माता अपरा प्रकृतिरहमेवाऽस्मि। धाता पोषकोऽहमस्मि। पितामहः अक्षर ब्रह्म अपि अहमेवाऽस्मि। वेद्यं ज्ञातुं योग्यं सर्वं वस्तु अहमेवाऽस्मि। पवित्रं पावकं सूर्याग्निवाय्वादि सर्वमेवाऽहमस्मि। ओंकारः परमात्मनाम अहमेवाऽस्मि। ऋक्सामयजूंषि ऋग्वेदः सामवेदः यजुर्वेदोऽहमेवाऽस्मि ॥ १७॥

(मू. गी.) पिताऽहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोंकार ~~सम्~~ ऋक्साम यजुरेव च ॥ १७॥ ×

(वेदगी.) स नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा।
यो देवानां नामध एक एव तं संप्रश्नं भुवना यन्ति सर्वा ॥ अथ. कां. २. सू. १ मं.
ऋचो नामास्मि यजूंषि नामाऽस्मि सामानि नामाऽस्मि। ये अग्नयः
पाञ्चजन्या अस्यां पृथिव्यामधि तेषामसि त्वमुत्तमः प्र नो जीवातवे
सुव ॥ यजुः १८।६७ नूतनमंत्रः ऋग्वेदपरिशिष्टे अष्ट. ८ अध्या. ८ सू. २४ मं. २२ ऋ. मं. ३. १. सू. १९६ अनन्तरम्
"यो वेदे महादेवं प्रणवं पुरुषोत्तमम् ओंकारं परमात्मानं तन्मे मनः शिवसंकल्पमस्तु"

स न इति = सः परमात्मा नोऽस्माकं प्राप्यप्राप्तानां वस्तूनां पिता पालयिता धाता पोष्टा अस्ति। सः परमात्मा एव जनिता उत्पादकः आदिकारणत्वेन पितृस्थानीयः अस्ति। स उत परमात्मा एव नः शासकः अस्ति। बन्धुः मातृवत् प्रेमबन्धुः अस्ति। स एव विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि धामानि स्थानानि च वेद वेत्ति। अत एव स परमात्मा पितामहोऽप्यस्ति। यः परमात्मा देवानामग्निवाय्वादिदेवानां नामध नाम्नां धाता स्थापयिता एक एव अद्वितीय ओंकार एवाऽस्ति। संप्रश्नं सम्यक्तया प्रश्नपूर्वकं ज्ञातुं योग्यं तं परमात्मानं सर्वा सर्वाणि भुवना भुवनानि भूतजातानि यन्ति प्राप्नुवन्ति प्रलयकाले लीनानि भवन्ति ॥ ऋचो नामास्मि ऋग्वेदनामाऽस्मि। यजूंषि नामाऽस्मि। अहं परमात्मा एव यजुर्वेदनामाऽस्मि। अहं परमात्मा सामानि नामाऽस्मि सामवेदोऽस्मि। ये च अग्नयः ज्ञानिनः यतयः पाञ्चजन्याः पञ्चजनेभ्यः मनुष्येभ्यः हिताः पञ्चजना इति मनुष्यनाम (निघं. २।३) मनुष्यश्रेयस्कर्तारः अस्यां पृथिव्याम् अधि उपरि स्थिताः सन्ति। हे परमात्मन्! ते त्वं सर्वेषां ज्ञानिनाम् उत्तमः उत्कृष्टतरोऽसि। अतः नः अस्माकं जीवातवे चिरञ्जीवनाय प्रसुव प्रेरको भव। ऋ. "यः ... जीवात्मानं महादेवं पुरुषोत्तमम् प्रणवम् ओंकारं परमात्मानं वेद तत् तस्मिन् ओंकारे मे मम मनः शिवसंकल्पे कल्याणसंकल्पमस्तु

(वेदगीता) पिता जनिता ... पौत्रः पितामहः ... स क्षिपति विश्वस्याग्नो ... अथ. कां. १९ सू. ... अग्निहोत्रः = परमात्मा जनिता ... देवस्य पिता जनकः ... अस्ति ... स परमात्मा विश्वस्य ... ईशानः ... क्षियति = सर्वान् लोकान् ... भूम्यां पृथिव्याम् अधिष्ठातः ... सर्वेषां न वर्तते

गतिरिति= गतिः कर्मफलं स्वर्गादिः अहमेवाऽस्मि । भर्ता पालकः अहमस्मि । प्रभुः सर्वप्राण्यप्राणिनां स्वामी अहमस्मि । साक्षी प्राणिकृतकर्मणां साक्षात्कर्ताऽप्यहमेवाऽस्मि । निवासः सर्वेषामन्तिमवासस्थानमहमस्मि । शरणं दुःखितानां दुःखहर्ताऽहमस्मि । सुहृत् प्राण्यप्राणिनाम् उपकर्ता चन्द्रवाय्वादिः अहमस्मि । प्रभवः सर्वजगदभिन्ननिमित्तोपादानकारणम् अहमस्मि । प्रलयः सर्वजगत्संहर्ताऽहमस्मि । स्थानं स्थितिकारणमहमस्मि । निधानं कार्यकारणप्रपञ्चाऽधिष्ठानमहमस्मि । अव्ययं व्ययरहितं बीजं जगद्बीजमप्यहमस्मि ।१८ ॥

(मू॰गी॰) गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥

(वेदगी॰) अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद् धरुणं मध्वो अग्रं स्वया तन्वा तन्वमैरयत ॥१ अथ॰ कां॰ ७ अ॰ १ सू॰ ३ मं॰ १

अया इति= अया अयं परमात्मा विष्ठा विविधं प्रकारं तिष्ठतीति विष्ठा "क्विप् च" इति क्विप्, सर्वात्मना स्थितः । (अत्र स्थाने सम् धि तम) कर्वराणि "कर्मनामैतत्" कार्यजातान् पदार्थान् जनयन् उत्पादयन् वर्तते । अनेन प्रभुत्वं समर्थितम् । स एव परमात्मा घृणिः दीप्यमानः वराय वरणीयाय शरणं प्राप्ताय उरुः महान् गातुः गतिः मार्गः साधनान्तरनिरपेक्षः महान् उपायः अस्ति । अनेन सः परमात्मा गतिः इति समर्थिता । हि शब्दो हेतौ वर्तते । सः परमात्मा एव धरुणं धारकं मध्वः मधुनः "नुमभावश्छान्दसः" मधुवदास्वाद्यस्य फलस्य अग्रं सारं बीजं प्रत्युदैत् प्रत्युद्गमयति स्तोतृभ्यः । प्रत्युदैत्= अन्तर्भावितण्यर्थः "एतेश्छन्दसो लङ्" गादेशाऽभावे "सिद्धि वृद्धिः" अनेन बीजत्वं फलप्रदातृत्वञ्च समर्थितम् । सर्वेषां फलप्रदत्वं स्वस्य सर्वनियन्तृत्वमन्तरेण न संभवतीति तदुपपादयति । स्वयेति= स्वया स्वीयया विराड्रात्मिकया तन्वा शरीरेण तन्वम् "जातावेकवचने" सर्वशरीराणि ऐरयत तत्तत्कर्मसु प्रेरयति । अया प्रथमाया आकारः । ऐरयत= ईर गतौ कम्पने च । "छान्दसो लङ्" ॥ १ ॥

तपामीति = अहं परमात्मा तपामि जगतः तापक्रियां करोमि। अहं वर्षं निगृह्णामि वर्षावरोधं करोमि। अहमेव वर्षासु वर्षाम् उत्सृजामि उ-
त्पादयामि। हे अर्जुन! अमृतं मुक्तिः, मृत्युः प्राणपरित्यागः, सत् नामरूपात्मकं कार्यं जगत् अहमस्मि, असत् तद्विलक्षणम् अव्यक्त-
म् अहमस्मि ॥१९॥

(मू. गी.) तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥१९

(वेदगीता) सन्नुच्छिष्टे असंश्चोभौ ~~[illegible]~~ मृत्युर्वाजः प्रजापतिः।
लौक्या उच्छिष्ट आयत्ता व्रश्च द्रश्चापि श्रीर्मयि ॥३। अथ. कां. ११ सू. ७ मं. ३

यद्वा "सतश्च योनिमसतश्च वि वः" अथ. कां. ४ सू. १ मं. १ "सतः व्यक्तजगतः मूलकारणं च असतः अव्यक्तस्य प्रादुर्भूतजगतः अव्यक्तरूपस्य योनिम् मूलकारणं वि वः प्रादुर्"
सदिति = उच्छिष्टे सकले ब्रह्माण्डे प्रलयं गते यः उत्तरम् शिष्यते स उच्छिष्टः परमात्मा। यद्वा इति न इति न इतिभावनया समस्ते
प्रपञ्चे निषिद्धे कृते सति यः सर्वेभ्योऽतिरिक्तः सन् शिष्यते स उच्छिष्टः परमात्मा, तस्मिन् उच्छिष्टे परब्रह्मणि सत् नामरूपा-
त्मकं कार्यं जगत् अस्ति। तस्मिन् उच्छिष्टे च असत् अव्यक्तरूपं प्रधानञ्च उभौ एव स्तः। तस्मिन् उच्छिष्टे मृत्युः सर्वप्रा-
णिनां प्राणहर्ताऽस्ति। तस्मिन् परमात्मनि द्रः = अमृतम् अस्ति। तस्मिन् परमात्मनि व्रः = सर्वोद्धारकः आकाशः
अस्ति। तस्मिन् परमात्मनि वाजः बलं तपो वाऽस्ति। प्रजापतिः प्रजापालकः मेघः वृष्टिर्वा तस्मिन्नुच्छिष्टे वर्तते।
तथा च लौक्याः समस्तलोके वर्तमानाः लोकाः उच्छिष्टे परब्रह्मणि आयत्ताः संयता सन्ति। तस्मिन्मयि परमात्मनि श्रीः = चेत-
नस्वरूपा शोभा विद्यमानाऽस्ति अतः तपो वर्षादिकं सर्वमहमेवाऽस्मि। तथा च मन्त्रान्तरम् "अहं भूमिमददामा-
र्यायाहं वृष्टिं दाशुषे मर्त्याय। अहमपो अनयं वावशाना मम देवासो अनु केतमायन्" ॥
ऋ. अष्ट. ३ अध्या. ६ व. १५ मं. २ (मं ३. ४ अनु. ३ सू. २६ मं. १) अहं परमात्मा आर्याय श्रेष्ठाय जनाय भूमिं वासाय पृथिवीं अददाम् ददामि
दाशुषे हविर्दत्तवते मर्त्याय यजमानाय मनुष्याय वृष्टिं सस्यानिष्पत्त्यर्थं वृष्टिरूपेण जलं अददाम्। अहमेव ददामि। किञ्च अहमेव अपः जलकारणमण्डलानि
कर्माणि तत्फलानि वा अनयम् प्रापयामि। वावशाना सदसदात्मके मां कामयमानाः देवासः ज्ञानिनः विद्वांसः मम मदीयं केतं निवासस्थानं
यद्वा मदीयं संकल्पं ज्ञानं वा आयन् अनुगच्छन्ति" तथा प्रश्नोप. प्र. २ श्रु. ९ "त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः" तथा बृह. अध्या. २ ब्रा. १ श्रु. २
स होवाच गार्ग्यो य एवाऽसावादित्ये पुरुष एतमेवाऽहं ब्रह्मोपास" तथा बृह. २।२६ "यदा त्वमभिवर्षसि" अथ च "असद्वा इदमग्र आसीत् ततो वै सद-
जायत"

त्रैविद्येति= त्रैविद्याः कर्मोपासनाज्ञानरूपाः तिस्रः विद्याः त्रिविद्या ता ये अधीयन्ते ते त्रैविद्याः त्रयीविद्याज्ञानिनः सकामकर्मकर्तारः सोमपाः यज्ञे सोमरसपायिनः अत एव पूतपापाः पापविरहिताः यज्ञैः अग्निष्टोमप्रभृतिभिः यज्ञैः मां परमेश्वरम् इष्ट्वा सम्यक् पूजयित्वा स्वर्गतिं स्वर्गप्राप्तिं प्रार्थयन्ते कामयन्ते। ते पुण्यात्मानः पुण्यं पवित्रं सुरेन्द्रलोकं स्वर्गस्थानम् आसाद्य प्राप्य दिवि स्वर्गलोके दिव्यान् स्वर्गमयान् देवभोगान् देवानां ये भोगा यच्छरीरं यद्योग्यं यत्सुखं तादृशान् एव भोगान् सुखविशेषान् अश्नन्ति भुञ्जते ॥ २० ॥

(मू० गी०) त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २० ॥

(वेद गी०) येन देवाः स्वरारुरुहुर्हित्वा शरीरममृतस्य नाभिम्।
तेन गेष्म सुकृतस्य लोकं घर्मस्य व्रतेन तपसा यशस्यवः ॥ ६
अथ० कां० ४ सू० ११ मं० ६

येनेति= येन वेदत्रयीज्ञानेन देवाः सोमपाः सकामकर्मकर्तारः विद्वांसः शरीरं पाञ्चभौतिकं देहं हित्वा परित्यज्य अमृतस्य अविनश्वरस्य भोगस्य नाभिं मध्यभागं स्वः स्वर्गम् आरुरुहुः आरोहन्ति। तपसा तपश्चर्यया यशस्यवः यशःस्वरूपं परं ब्रह्म प्राप्तुम् इच्छमानाः वयं सेवकाः घर्मस्य अग्निष्टोमादियज्ञस्य व्रतेन व्रतधारणेन तेन वेदत्रयीज्ञानेन सुकृतस्य पुण्यात्मनः लोकं पुण्यं स्वर्गलोकं गेष्म प्राप्नुवाम ॥ ६ ॥ यथा चोपनिषदि "एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्। तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ,, मुण्डोप० मु० १ खं० २ श्रु० ५

ते इति = ते सोमपाः याज्ञिकाः पुरुषाः विशालं पुण्यातिशयेन विस्तृतं स्वर्गलोकं स्वर्गीयं सुखविशेषं भुक्त्वा भोगं कृत्वा पुण्ये क्षीणे विनष्टे सति मर्त्यलोकं मनुष्यलोकं विशन्ति । जन्म गृह्णन्ति । एवम् इत्थं त्रयीधर्मं वेदत्रयीधर्मम् अनुप्रपन्नाः प्राप्ताः कामकामाः काम्यन्ते इति कामाः भोगाः तान् एव कामयन्ते इति कामकामाः विषयलम्पटाः गतागतं गमनागमनं जन्ममरणप्रवाहं लभन्ते ॥ २१ ॥

(मू॰ गी॰) ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥

(वेद गी॰) स्वर्यन्तः नापेक्षन्त आ द्यां रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥ ६८
यजुः १७।६८ अथ॰ कां॰ ४ सू॰ १४ मं॰ ४

नूतनोमं त्रे: "ये अर्वाञ्चस्तां उ पराच आहुर्ये पराञ्चस्तां उ अर्वाच आहुः । इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥" ऋ॰ मं॰ १ सू॰ १६४ मं॰ १९

स्वर्यन्त इति = ये यजमानाः कामकामाः सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः विश्वतोधारं सर्वतोधारम् आहुतिदक्षिणाज्यादीनि यज्ञस्य धाराः, ता दधन्ते यज्ञं यद्वा विश्वस्य जगतः धारयितारं यज्ञम् अग्निष्टोमादियज्ञं वितेनिरे वितन्वन्ति । ते कामकामाः विद्वांसः स्वः स्वर्गलोकसुखं यन्तः प्राप्नुवन्तः न अपेक्षन्ते पुण्यकर्मप्रभावात् मनुष्यलोकोपभुक्तं पुत्रपश्वादिसुखम् न अपेक्षन्ते न कामयन्ते । पुण्योपभोगपर्यन्तं रोदसी = जरामृत्युशोकादीनां रोध्री द्यां स्वर्गीयं प्रकाशमयं लोकम् आरोहन्ति अधिगच्छन्ति ॥ ६८ ॥ यथा मुण्डको॰ मु॰ १ खं॰ २ श्रु॰ ७ "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥" ॥ ये इति = ये अर्वाञ्चः मनुष्याः *सन्ति तान् उ = एव पराञ्चः ब्रह्मलोकादिगामिनः आहुः कथयन्ति । ये पराञ्चः ब्रह्मलोकादिस्थाः तान् उ = एव अर्वाचः आहुः । पूर्वकृतपुण्यकर्मणां पुण्ये क्षीणे सति अत्र लोके पुनरावर्तन्ते । हे सोम! हे सुन्वन् = कर्मिन्! प्रयोजककर्तः! त्वम् इन्द्रः प्रयोजककर्ता युवां या यानि कर्माणि चक्रथुः कृतवन्तौ स्थः तानि कर्माणि धुरा अन्तःकरणेन लिङ्गशरीरेण युक्ता युक्तानि रजसः मनुष्यलोकान् वहन्ति ब्रह्मादिलोकं प्रापयन्ति रजसः ब्रह्मलोकाद् वहन्ति मर्त्यलोकं प्रापयन्ति । धुरा न युक्ता यथा रथस्य धुरा युक्ता [illegible] देशाद्देशान्तरं प्रापयन्ति तद्वदित्यर्थः ।

* ज्योतिष्टोमादिसकामकर्मरताः अर्थात् वेदत्रयीप्रोक्तसकामकर्मधर्ममनुप्रपन्नाः

×. प्रेतकम् [illegible] कर्मकोटिताः ये मनुष्याः प्रयान्ति ब्रह्मादिलोकान् तेषु ते लोकान् । तत्र सन्तः यावत् ... प्रमन्ति कर्मक्षयात् पारशकारणात् "

अनन्या इति = ये जनाः अनन्याः अन्याश्रयरहिताः सन्तः मां परमात्मानं चिन्तयन्तः मच्चिन्तनं कुर्वन्तः पर्युपासते मदुपासनां कुर्वन्ति। अहं परमात्मा नित्याऽभियुक्तानां निरन्तरसमाहितचित्तानां तेषां ब्रह्मोपासकानां योगक्षेमम् अप्राप्तस्य वस्तुनः प्रापणं योगः, स्थितस्य परिपालनं क्षेमः तदुभयमेव वहामि करोमि। यद्वा योगः ब्रह्मसमाधिः तस्य क्षेमम् आध्यात्मिकाद्युपद्रवरहितं वहामि करोमि ॥ २२

(मू. गी.) अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याऽभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२॥

(वेदगी.) योगक्षेमं वं आदायाऽहं भूयासमुत्तम आवो मूर्धानमक्रमीम्।
अधस्पदान्म उद्वदत मण्डूका इवोदकान् मण्डूका उदकादिव ॥ ५॥
वेदऋ. अष्ट. ८ अध्या. ८ व. २४ मं. ५ (मंड. १० अनु. १२ सू. १६६ मं. ५)

योगक्षेममिति = हे जीवात्मानः! हे योगिनः! मे मम परमात्मनः अधस्पदात् पादस्याधस्तात् क्षुद्रजीवने वर्तमानाः यूयम् उदकात् वृष्टिजलात् अधःप्रदेशे वर्तमाना मण्डूका इव उद्वदत उच्चैः मां चिन्तयत। ततोऽहं निरन्तरसमाहितचित्तानां वो युष्माकं योगिनां मूर्धानं मूर्धस्थानीयम् उच्चैस्तराम् पदवीम् आक्रमीम् आसमन्तात् करोमि। ततः अहं परमात्मा वो युष्माकं योगक्षेमं अप्राप्तस्य वस्तुनः प्राप्तिः योगः, प्राप्तस्य वस्तुनः रक्षणं क्षेमः तदुभयम् आसमन्तात् दाय दत्वा यद्वा योगः ब्रह्मसमाधिः तस्य क्षेमम् आध्यात्मिकाद्युपद्रवरहितं योगकौशलमितिभावः आ समन्तात् दाय दत्वा उत्तमः परमपदप्राप्तिदायकः सर्वश्रेष्ठः भूयासम् भवामीति। अक्रमीम् = क्रमेर्लुङि "अमो मश्र" "इट ईटि" सिचो लोपः ॥ ५॥

ये इति = ये जना अन्यदेवताभक्ताः अन्यासां देवतानां भक्ताः उपासका अपि श्रद्धयान्विताः श्रद्धायुक्ताः सन्तः यजन्ते वेदोदितविधिना उपासते। हे कौन्तेय! हे अर्जुन! तेऽपि मां परमात्मानम् अविधिपूर्वकं शास्त्रविधिं विहाय यजन्ति पूजयन्ति ॥ २३ ॥

(मू.गी.) येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकम् ॥ २३ ॥

(वेदगी.) यच्चिद्धि शश्वता तना देवं देवं यजामहे।
त्वे इद्धूयते हविः ॥ सामवे. उत्तरा. ७ प्र. अर्द्ध. ३

यदिति = यत् चित् हि (यत् हि) = यद्यपि हि शश्वता शश्वतेन नित्येन तना विस्तृतेन हविषा पूजनेन देवं देवम् अन्यम् अन्यम् वरुणेन्द्रादिरूपं नानाविधं देवताविशेषं यजामहे पूजयन्ति (पूजयामः) "पुरुषव्यत्ययः"। तथापि तत् हविः तत्पूजनं त्वे इत् त्वयि एव हूयते (अर्प्यते) अन्यदेवताविषयो यागोऽपि त्वदीयैव सेवा इत्यर्थः। "तना" = तनु विस्तारे "क्विप् च" इति क्विप्। यद्वा "पचाद्यच्" "सुपां सुलुक्" इति तृतीयाया आकारः। त्वे = युष्मच्छब्दस्य "छन्दसि" शे आदेशः। "त्वमावेकवचने" इति त्वादेशः। "अतो गुणे" इति गुणाभावः ॥ ३ ॥

अहमिति= सर्वयज्ञानां श्रौतस्मार्तनानाविधयज्ञानां भोक्ता उपभोगकर्ता च तथा प्रभुः नेता अहं परमात्माऽस्मि। ते अन्यदेवोपासका एवंविधं मां तत्त्वेन यथार्थतः न जानन्ति। अतः तेच्यवन्ति परमपुरुषार्थात् भ्रश्यन्ति॥२४॥

(मू. गी.) अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।
न तु मामभिजानन्ति तत्त्वेनाऽतश्च्यवन्ति ते॥२४॥

(वेदगी.) अहं सो अस्मि यः पुरा सुते वदामि कानिचित्।
तं मा व्यन्त्याध्यो३ वृको न तृष्णजं मृगं वित्तं मे अस्य रोदसी॥८॥
ऋ. अष्ट. १ अध्या. ७ व. २१ मं. ८ मं. १ सू. १०५ मं. ८

अहमिति= हे मनुष्याः! अहं परमात्मा वदामि कथयामि यः पुरा सर्वतः प्राचीने सुते युष्माकं यज्ञे कानिचित् कतिपयानि कर्माणि स्तोत्राणि वा सन्ति। सः सर्वकर्ममयः यज्ञः अहमस्मि। यद्वा पुरा पूर्वभूते सुते यज्ञे कानिचित् स्तोत्राणि कर्माणि वा वदामि उक्तवान् अस्मि। स सर्व एव अहमस्मि न तु अन्यः कश्चित् अस्ति। तस्मात् किमर्थं मां परित्यजथ। युष्मान् आध्यः आधीयते मनसि स्थाप्यते इत्याधिः तात्त्विकी मानसी स्थितिः ता आध्यः मानस्यः स्थितयः ते तादृशीं यज्ञपतिं मां परमात्मानं विस्मरन्ति सम्यक्तया न अभिजानन्ति। वृको न तृष्णजं मृगम् = अरण्यश्वा तृष्णजं जाततृष्णं मृगं यथा विनाशयति तथा तत्त्वतो माम् अजानन् ~~मां स्वान्तः~~ अन्तःकरणे विनश्यति। मां स्वान्तःकरणात् व्यावयतीति भावः। हे रोदसी! हे द्यावापृथिवीवासिनः पुरुषाः!!! मे मदीयम् अस्य इदं वचनं वित्तं जानीतम्। व्यन्ति= वी गत्यादिषु अदादित्वाच्छपो लुक्। "तन्वादीनां छन्दसि बहुलमुपसंख्यानम्" इति बहुलवचनाद् यण्। आध्यः = "उपसर्गे घोः किः" "आतो लोप इटि च" इत्याकारलोपः। "जसादिषु छन्दसि वावचनमिति" "जसि च" इति गुणस्य विकल्पनाद् अभावे यणादेशः। तृष्णजम् = तृष पिपासायाम्। "स्वपितृषो नजिङ्" इति नजिङ्। पदकारस्त्वेवं मन्यते। "अन्येष्वपि दृश्यते" इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि जनेर्डप्रत्ययः। तृष्णे जाता यस्य "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वत्वम्। वित्तम् = विद ज्ञाने लोटि अदादित्वात् शपो लुक्। अस्य = क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी॥८॥

तथा छान्दो. उप. प्र. ५ खं. २४ श्रु. २ "अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु भूतेषु सर्वेष्वात्मसु हुतं भवति"

यान्तीति= देवव्रताः देवेषु विष्णुशिवादिदेवेषु व्रतं येषां ते देवव्रताः देवयाजिनः देवान् ~~शिवविष्णु~~वा विष्णुशिवादिदेवान् यान्ति तत्तत्पदं गच्छन्ति।

(मू० गी०) यान्ति देवव्रता देवान्।

(वेदगी०) देवयन्तो यथामतिमच्छा विदद् वसुं गिरः। महामनूषत श्रुतम्॥ २

अथ० कां० २० सू० ७० मं० २ ऋ० अध्या० १ अष्ट० १ व० १२ मं० ६

देवयन्त इति= गिरः गृणन्ति स्तुवन्ति ~~इति~~ गिरः शिवविष्ण्वादिदेवानां स्तोतारः जनाः देवयन्तः देवान् विष्णुशिवादिदेवान् कामयमानाः यथामतिम् यथार्थतया मननयोग्यं वसुं वासयोग्यं श्रुतं विख्यातं श्रावणयोग्यं वा महां महान्तम् अच्छ प्रत्यक्षीभूतं तं देवं विदद् जानन्ति। ते अनूषत देवान् स्तुवन्ति। देवयन्तः= देवान् आत्मनः इच्छन्तः। "सुप आत्मनः क्यच्" "क्यचि च" इतीत्वम्। "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घत्वमत्र न भवति। यथा= "प्रकारवचने थाल्" इति थाल् प्रत्ययः। मतिम्= "मंत्रे वृषेषपचमनेत्यादिना क्तिन्। गिरः= गृणातेः क्विप्। "ॠत इद्धातोः" इतीत्वं रपरत्वम्। महां= महान्तम् नकारतकारयोर्लोपः छान्दसः। अनूषत= णु स्तुतौ व्यत्ययेन आत्मनेपदम् लुङि हेः स्यादेशः। "सिचि कुटादित्वेन" ङित्वाद्गुणाऽभावः। इडभाव उकारदीर्घत्वञ्च छान्दसम्॥ २॥

पितृन्निति= पितृव्रता: पितृषु श्राद्धभूतभोजनादिनियमो येषां ते पितृव्रता: पितृन् पूजयन्त: पितृन् अग्निष्वात्तादीन् मा
प्नुवन्ति।

(मू॰गी॰) पितॄन् यान्ति पितृव्रता: ॥

(वेदगी॰) ये न: पूर्वे पितर: सोम्यासोऽनूहिरे सोमपीथं वसिष्ठा:।
तेभिर्यम: संरराणो हवींष्युशन्नुशद्भि: प्रतिकाममत्तु ॥ ५१
यजु: १९।५१ ऋ॰ अष्ट॰ ७ अध्या॰ ६ व॰ १८ मं॰ ८ (मंड॰ १० अनु॰ १ सू॰ १५)

हे परमात्मन्!
ये इति= न: पितृपूजकानाम् अस्माकं ये पूर्वे पूर्वतना: पितर: पितापितामहप्रपितामहादय: सोम्यास: सौम्यगुणयुक्ता: शान्त्यादि गुणवन्त: वसिष्ठा अतिशयेन जितेन्द्रियतायुक्ता: सोमपीथं पिण्डपितृयज्ञे सोमरसपानम् अनूहिरे आनुपूर्व्येण ~~[illegible] प्राप्नुवन्ति।~~ ~~पितृभ्य: ददतीत्यर्थ:~~। हवींषि= पैतृकयज्ञसम्पादितानि अन्नानि उशन् कामयमान: यम: इन्द्रियसंयमी पितृपूजक: पितृस्वरूपमापन्नः तेभि: तै: पितृभि: सह संरराण: संप्रीयमाण: रममाणो वा उशद्भि: कामयमानै: सह प्रतिकामं कामं कामं प्रति अत्तु यानि यानि हवींषि कामयते तानि तानि भक्षयतु इत्यर्थ:। अनु+ऊहिरे= वह प्रापणे। वसिष्ठा: = इष्ठन् प्रत्यय:
तथा कृष्ण॰ यजु: आरण्य॰ ६ अष्ट॰ १ अनु॰ १० "देवान् वै पितॄन् प्रीतान् मनुष्या: पितरोऽनुप्रीयन्ते,, तथा शतपथब्राह्मणे "शरदि कुर्यात् स्वधां वै" शरत्स्वधो वै पितृणामन्नं तदेनमन्नं स्वधया दधाति,, यद्वा ऋ॰ मंड॰ १० सू॰ १५ मं॰ २ "इदं पितृभ्यो नमोऽस्त्वद्य ये पूर्वासो य उपरास ईयु:। ये पार्थिवे रजस्यानिषत्ता ये वा नूनं सुवृजनासु विक्षु,,

भूतानीति= भूतेज्याः विनायकवेतालदुर्गादिभूतान् जपबल्यादिभिः ये यजन्ति, ते भूतेज्याः भूतपूजकाः जनाः भूतानि यान्ति प्राप्नुवन्ति ॥

(भ. गी.) भूतानि यान्ति भूतेज्याः।

(वेदगी.) भूतो भूतेषु पय आदधाति स भूतानामधिपतिर्बभूव।
तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ १
अथ. कां. ४ सू. ८ मं. १

भूत इति= भूतः भूतोपासकः भूतेषु समृद्धपुरुषेषु पयः पूजाद्रव्यम् आदधाति धारयति अर्पयतीत्यर्थः। स भूतोपासक एव भूतानां अधिपतिः स्वामी बभूव भवति। तस्य भूताऽधिपतेः मृत्युः दण्डसामर्थ्यं राजसूयं यज्ञादिकर्माणि चरति प्रवर्तते। सः भूतपतिः राजा जगति प्रकाशमानः सन् इदं राज्यं इदं भूतराज्यम् अनुमन्यताम् स्वीकरोति। १ ॥

यान्तीति=मद्याजिनः मदुपासकाः जनाः मां परमात्मानम् एव यान्ति प्राप्नुवन्ति ॥ २५ ॥

(मू. गी.) यान्ति मद्याजिनोऽपि माम् ॥ २५

(वेद गी.) सुतपाव्ने सुता इमे शुचयो यन्ति वीतये। सोमासो दध्याशिरः ३
ऋ. (१।५।५) अथ. कां. २० सू. ६९ मं. ३

सुतपाव्ने इति=इमे मद्याजकाः शुचयः निर्मलाः निष्पापाः सन्तः सुताः ज्ञानेन अभिषिक्ताः मद्योगसमाधिनिष्णाताः सोमासः शान्ताः (मदुपासकाः) ज्ञानिनः दध्याशिरः=दधाति पुष्णातीति दधि ध्यानयोगः, श्रृणाति हिनस्ति स्वाभाविकं दोषं इत्याशीः दध्ना ध्यानयोगेन देहदोषान् श्रृणाति हिनस्तीति दध्याशीः ते दध्याशिरः परमात्मध्यानयोगेन नष्टदेहदोषाः सन्तः सुतपाव्ने सुतं ज्ञाननिष्णातं पाति रक्षति इति सुतपावा ईश्वरः तस्मै सुतपाव्ने परमेश्वराय=परमेश्वरमित्यर्थः वीतये विशेषेण पूर्णतया प्राप्तये यन्ति प्राप्नुवन्ति मोक्षमार्गमनुसरन्तीत्यर्थः ॥ सुतपाव्ने=सुतं पातीति सुतपावा, वनिपः पित्वात् धातुस्वर एव शिष्यते। समासे द्वितीयापूर्वपदप्रकृतिस्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम्। शुचयः= शुच दीप्तौ "इगुपधात् कित्" इतीनः कित्वात् लघूपधगुणाऽभावः। वीतये=व्युपसर्गपूर्वकेण गतौ धातोः क्तिन् प्रत्ययः। सोमासः=षुञ् अभिषवे "अर्तिस्तुसुहुसृधृक्षि" इत्यादिना मन् प्रत्ययः। "आज्जसेरसुक्" इत्यसुगागमः। दध्याशिरः=दधि डुधाञ् धारणपोषणयोः "आदृगमहनजनः किकिनौ लिट् च" इति किन्। विड्वद्भावाद्द्विर्भावः। कित्वादाकारलोपः। शॄ हिंसायाम्=क्विप् "ऋत इद्धातोः" इतीत्वं रपरत्वञ्च ॥ ३ ॥

पत्रमिति: यो मुमुक्षु: जन: मे मह्यं परमात्मने पत्रं पुष्पं फलं तोयं वा अर्थात् अल्पादपि अल्पं वस्तु भक्त्या श्रद्धाभक्त्या प्रेम्णा वा प्रयच्छति समर्पणं करोति। प्रयतात्मन: प्रयतं वशीकृतम् आत्मा मनो येन स प्रयतात्मा तस्य प्रयतात्मन: शुद्धवृत्ते: भक्त्या प्रेममय्या सेवया उपहृतं समर्पितं तद् वस्तु अहं परमात्मा अश्नामि स्वीकरोमि ॥ २६ ॥

(मू. गी.) पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मन: ॥ २६ ॥

(वेदगी.) प्रयाजान् मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्तभागम्।
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवा: ॥ ८ ॥
ऋ. अष्ट. ८ अध्या. १ व. ११ मं. ८ (मंड. १० अनु. ४ सू. ५१ मं. ८)

प्रयाजानिति = हे देवा:! हे मुमुक्षव: जना:! यूयं मे मह्यं परमात्मने प्रयाजान् प्र = प्रकृष्टया भक्त्या यष्टुं योग्यान् अन्नादीन् पदार्थान् केवलान् भक्त्याऽपहृतान् असाधारणान् पदार्थान् दत्त प्रयच्छत। तथा ऊर्जस्वन्तं सारवन्तं हविष: हूयते इति हवि: "हु कर्मणि असुन्" हविष: आहवनीयद्रव्यस्य घृतस्य भागं भक्त्या दत्त प्रयच्छत। तथा ऊर्जस्वन्तं सारभूतं घृतम् उदकम् अपां जलानां सारभूतं जलोत्पन्नं पत्रपुष्पादिकं तथा ओषधीनाम् ओषधिभ्य उत्पन्नं फलं भागं पुरुषं परमात्मानं परमात्मने इत्यर्थ:। "पूरयति अन्त: इति पुरुष: परमात्मा" "यस्मात्परं नाऽपरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् (निरु. २।३) दत्त प्रयच्छत। भवद्भि: भक्त्युपहृतमेतत्पत्रपुष्पादिकं सर्वम् अग्ने: सर्वव्यापकस्य मम दीर्घम् आयु: चिरकालं स्वीकृतम् अस्तु। तथा च मन्त्रान्तरम् "यो अस्मा अन्नं तृष्वाऽदधात्याज्यैर्घृतैर्जुहोति पुष्यति। तस्मै सहस्रमक्षभिर्विचक्षेऽग्ने विश्वत: प्रत्यङ्ङसि त्वम्" ऋ. अष्ट. ८ अध्या. ३ व. १८ मं. ५

तथा च श्रीमद्भा. १० मस्क. अध्या. ८१ श्लो. ३ "अण्वप्युपाहृतं भक्तै: प्रेम्णा भूर्येव मे भवेत्। भूर्यप्यभक्तोपाहृतं न मे तोषाय कल्पते ३। नन्वेतदुपनीतं परमप्रीणनाय सखे। तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुला: ९

यत्करोषीति = हे अर्जुन ! यत् शास्त्रप्रतिपादितं कर्म करोषि विधत्से । यत् शास्त्रविहितमश्नासि भक्षयसि । यत् यथाशास्त्रं हविः अग्नौ जुहोषि प्रक्षिपसि । यद्देयं द्रव्यं दीनेभ्यः प्रयच्छसि ददासि । यत् संध्यावन्दन वेदाध्ययनादिकं व्रतोपवासादिकं वा तपः करोषि । लोकवेदोक्तं कर्म यत् करोषि तदेव मदर्पणं ब्रह्मार्पणबुद्ध्यैव सकलं कर्तव्यं कर्म कुरुष्व ॥ २७ ॥

(मू. गी.) यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

(वेदगी.) यदश्नासि यत्पिबसि धान्यं कृष्याः पयः ।
यदाद्यं१ यदनाद्यं सर्वं ते अन्नमविषं कृणोमि ॥ १९
अथ. कां. ८ अनु. १ सू. २ मं. १९ अपरः नूतनः मंत्रः "ऋ. मं. ७ सू. ३१ मं. ४ अथ. कां. २० सू. १८ मं. ९
"त्वे अपि क्रतुर्मम"

यदश्नासीति = हे कृष्याः ! योगेन कर्षणार्हं मनो येषां ते कृष्याः तत्संबोधने हे कृष्याः ! हे योगिनः ! पुरुषाः ! यत् शास्त्रविहितम् ~~अन्नम्~~ धान्यम् अन्नम् अश्नासि भक्षयसि । यत् यथाशास्त्रं पयः प्रभृति पेयं द्रव्यं पिबसि पानं करोषि । अथ च यथाविधि धान्यं व्रीह्यादिधान्यं जुहोषि अग्नौ हवनं करोषि । यत् आद्यम् अदनीयं (स्वस्वभावानुकूलं) सुखेन भक्षणीयं द्रव्यं भक्षयसि, यत् अनाद्यं परस्मै देयं द्रव्यं दीनेभ्यः ददासि । मदर्पितं तत्सर्वम् अन्नादि द्रव्यं ते त्वदर्थम् अविषम् दोषरहितम् अमृतम् कृणोमि । करोमि ॥ १९ ॥

भक्तः प्रार्थयति हे परमात्मन् ! नः अस्मान् स्वभक्तान् निदे निन्दकपुरुषे मा रधीः अधीनं मा कुरु अर्थात् तदधीना वयं नस्याम अपि अराव्णे = अदातृत्वरूपिणे तथा वक्तवे : कठोरभाषिणः मा रधीः ~~अधी~~ अधीनं मा कुरु मम = भक्तस्य क्रतुः अन्नयजनदानतपश्चरणादिकं कर्म त्वे त्वयि परमात्मनि अर्थात् त्वदर्पणमस्ति ॥

शुभाशुभेति = एवं परमात्मार्पणमकृत्वा लौकिकं वैदिकञ्च कर्म कुर्वन् त्वं शुभाऽशुभफलैः सुखदुःखफलैः कर्मपाशैः मोक्ष्यसे मुक्तिं प्राप्स्यसे। संन्यासयोगयुक्तात्मा संन्यासः परमात्मनि कर्मफलार्पणं स एव योगः कर्मबन्धमोक्षोपायः तत्र युक्तः लग्नः आत्मा मनो यस्य तथा च तथोक्तः सन् मां परमात्मानम् उपैष्यसि प्राप्स्यसि ॥ २८ ॥

विमुक्तः

(मू. गी.) शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥

(वेदगी.) क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन् सुरेक्णाः। मर्त आनाश सुवृक्तिम् ॥२६॥
ऋ. अष्ट. ४ अनु. ५ व. २६ मं. २६ (मंड. ६ अनु. २ सू. १६ मं. २६)

वन संभक्तौ, दाः
क्रत्वेति = हे परमात्मन्! अद्य एतज्जन्मनि क्रत्वा त्वत्परिचरणात्मना कर्मणा त्वा त्वां परमात्मानं वन्वन् संभजन् अस्तु विमुक्तो भवति। सुरेक्णाः शोभनस्तोत्रः सर्वं त्वदर्पणमेव दाता योगी अत एव श्रेष्ठः। कर्मबन्धनविमुक्तत्वात् अतिशयेन प्रशस्यः स मर्तः संन्यासयोगयुक्तात्मा विमुक्तः मनुष्यः सुवृक्तिम् त्वद्विषयां सुष्टुतिं सम्यक्स्तुतिम् आनाश प्राप्नोति। स सर्वदा तव स्तोता भवतीत्यर्थः। २६॥

सम इति = सर्वभूतेषु सर्वप्राणिषु अहं परमात्मा समः पूर्णः एकरसोऽस्मि। मे मम न द्वेष्यः द्वेष्टुं योग्यः नास्ति, न च मम प्रियः स्निग्धः नास्ति। ये जनाः मां परमात्मानं भक्त्या परया श्रद्धया भजन्ति सेवन्ते। ते जनाः मदुपासकाः मयि आनन्दस्वरूपे ब्रह्मणि वर्तन्ते। अहं परमात्माऽपि च तेषु ब्रह्मवित्सु सर्वदा वर्ते ॥ २८ ॥

(मू. गी.) समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥

(वेद गी.) कृणोत्यस्मै वरिवो य इत्थेन्द्राय सोममुशते सुनोति।
सध्रीचीनेन मनसाविवेनन्तमित्सखायं कृणुते समत्सु ॥ ६
ऋ. अष्ट. ३ अध्या. ६ व. १२ मं. ६ (मं. ४ अनु. ३ सू. २४ मं. ६)

कृणोतीति = यः मदुपासकः ब्रह्मनिष्ठः इत्था एवंप्रकारेण परया भक्त्या सोमं शान्त्यादिगुणयुतं स्वमतम्, उशते कामयमानाय इन्द्राय परमात्मने सध्रीचीनेन सम्यक्तया (सम्यक्) सुनोति अभिधानं करोति (प्रकटति भजते) परमात्माऽपि असमै एवंविधोपासकाय स्वसेवकाय वरिवः ज्ञानधनं कृणोति करोति। विवेनः विगते छुः रागद्वेषरहितः, विवेनन् केनचिदपि सह रागद्वेषादिकम् अकुर्वन् परमात्मानम् इत् तमेव सेवकं सखायं समानवासं मित्रं समत्सु सर्वविधप्रसन्नतायां कृणुते करोति। अर्थात् मुक्तिं प्रयच्छति ॥

अपि चेदिति = यः पूर्वं ब्राह्मणादिषु वर्णेषु कश्चनाऽपि सुदुराचारः अत्यन्तदुष्टाचारोऽपि सत्संगतिं लब्ध्वा अनन्यभाक् आत्मानमन्तरेण देहेन्द्रियादिकं न भजतीति अनन्यभाक् आत्मसेवी सन् मां परमात्मानं भजते सेवते। सः अनन्यभक्तः साधुः सत्पुरुष एव मंतव्यः पण्डितैः ज्ञातव्यः। हि यस्मात् कारणात् सः पुरुषः सम्यग् व्यवसितः सम्यग्ज्ञानसम्पन्नः क्षिप्रं शीघ्रं धर्मात्मा पुण्यात्मा भवति शश्वत् शाश्वतीं शान्तिं निर्वाणपदवीं निगच्छति प्राप्नोति। हे कौन्तेय! हे अर्जुन! मे मम परमात्मनः भक्तः सेवकः न प्रणश्यति। मुक्तिमार्गतः न प्रभ्रश्यति इति प्रतिजानीहि त्वं निश्चयेन जानीहि ॥३०॥

(मू० गी०) अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

(वेदगी०) इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांसि।
तितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥यजु: ३४।१८
ऋ० अष्ट० ३ अध्या० २ व० १ मं० १ (मं० ३ अनु० ३ सू० ३० मं० १)

इच्छन्तीति = ये सुदुराचाराः ब्राह्मणादयः अपि प्रयांसि प्राणादिहवींषि भगवदर्थं दधति धारयन्ति अर्थात् भगवद्भजनं कुर्वन्ति। अथ च ते त्वत् त्वदर्थम् एव जनानां सर्वेषां मनुष्याणाम् अभिशस्तिं तत्कृतां हिंसां दुर्वचनं वा तितिक्षन्ते सहन्ते अर्थात् मनोवाक्कायसंयताः क्षान्तिपराः साधवः भवन्ति। अत एव ते एव सुदुराचाराः जनाः तितिक्षादिगुणान् उपलभ्य सोम्यासः शान्तिमापन्नाः सखायः सर्वेषां मित्रभूताः त्वा त्वां परमात्मानम् इच्छन्ति कामयन्ते अर्थात् ते एव त्वद्भक्ताः सोमं मुक्तिपदवीं सुन्वन्ति साधुवन्ति। हे इन्द्र! हे परमात्मन्! त्वत् त्वत्सकाशादेव आसमन्तात् कः चनो निपातः अप्यर्थे। कः+चन = कोऽपि प्रकेतः भक्तानां मध्ये कोऽपि ज्ञानवान् भवति। हि: निश्चयार्थेऽस्ति। १॥

२०४ वेदगीता [illegible]

अध्या. ९ श्लो. ३२

मामिति = हे पार्थ! हे अर्जुन! स्त्रियः, वैश्याः, तथा शूद्रा येऽपि अन्ये पापयोनयः नीचजन्मानः नीचकर्माणः स्युः भवन्ति। तेऽपि मां परमात्मानं व्यपाश्रित्य सम्यक्तया समुपास्य परां गतिं मुक्तिं यान्ति गच्छन्ति ॥ ३२ ॥

(मू. गी.) मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥

(वेद गी.) ये धीवानो रथकाराः कर्मारा ये मनीषिणः।
उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान् ॥६

अथ. कां. ३ अनु. १ सू. ५ मं. ६ यद्वा

उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी। अदेवत्रादराधसः॥
ऋ. मंड. ५ सू. ६१ मं. ६ (नूतनो मन्त्रः) स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान् न विचेतदन्धः।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पितासत् ॥ ऋ. मंड १ सू. १६४ मं. १६

ये इति = परमात्मा उपदिशति। हे पर्ण! हे ज्ञानवन्! हे यते! ये रथकाराः शिल्पिनः शूद्राः धीवानः परमात्मभक्तो बुद्धिमन्तः सन्ति। ये कर्माराः कर्मकराः लोहकार सुवर्णकारादयः कर्मकरत्वेन शूद्रभूता अपि मनीषिणः भगवदुपासनायां बुद्धिमन्तः सन्तः अध्यात्मविद्याज्ञातारः सन्ति। तान् उपस्तीन् मदुपासनार्थं उपस्थितान् सर्वान् सकलान् तान् जनान् स्त्री वैश्यशूद्रादीन् सुदुराचारान् अपि अभितः सर्वतः त्वं ब्रह्मविद् यतिः मह्यं परमात्मने स्वसंगतिप्रभावेण कृण कुरु। कर्माराः = कर्म ऋच्छतीति = ऋ धातोः अण् प्रत्ययः ॥ ६ ॥ यद्वा = उतेति उत अपि च त्वा एका नीचा स्त्री अदेवत्रात् देवपूजनं परमात्मपूजनम् अकुर्वतः अराधसः दानार्हधनरहितात् लुब्धकात् पुंसः पुरुषात् शशीयसी प्रशस्या वसीयसी वासाही भवति ॥ ६ ॥

आधिके हि अत्याशवती इति स गुरुः स्यात्... [illegible]

स्त्रिय इति = उ = अपि मे मम ब्रह्मवित्वेन परमात्मनः सतीः सम्बन्धिनीः आत्मविद्याप्रवीणाः स्त्रियः अपि तान् = अत्यन्तोत्कृष्टान् पुंसः पुरुषान् आहुः लौकिकं स्त्रीत्वं ब्रह्मविद्याविषये आतिदेशिकेन पुंस्त्वेन श्रौतेन बाध्यते। ततः सा स्मृतिः ब्रह्मविद्येतर विषया एव "ज्योत्स्नादि कोकितां स्त्रीत्वे ऽप्यस्ति ब्रह्मणि भागिता। रुक्मिणी देवहूती लादेवक्यो ब्रह्मवित्तमाः" पश्यत् स्त्री वा पुरुषो वा यदि ब्रह्म पश्यति तदा अक्षण्वान् चक्षुष्मानेवासौ। अविचेतत् ब्रह्मविद्यां न वेत्ति चेत् तदा अन्ध एवासौ। कविः तत्त्वज्ञः ज्ञानी यः पुत्रः वयसा अल्पोऽपि स ईम इदम्

शशीयसी महिषी २०४
प्रशस्या

किं पुनरिति = पुण्याः पवित्रात्मानः ब्राह्मणाः तथा पुण्यकर्माणः राजर्षयः राजश्रेष्ठाः भक्ताः मद्भक्तिसम्पन्नाः पुनः परां गतिं मुक्तिं यान्ति इत्यत्र किं किमु वक्तव्यम्। अनित्यं विनश्वरम् असुखम् दुःखमयम् इमं लोकं लोक्यते इति लोकः यद्वा आत्मस्वरूपं लोकयतीति लोकः मानवो देहः तमिमं मुक्तिसाधनं मानवं देहं प्राप्य लब्ध्वा मां परमात्मानं भजस्व भजनं कुरु ॥ ३३।

(मू. गी.) किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥

(वेदगी.) यं विप्रा उक्थवाहसोऽभिप्रमन्दुरायवः।
घृतं न पिप्य आसन्यृतस्य यत् ॥१३

ऋ. अष्ट. ६ अध्या. १ व. ३ मं. १३ (मंड. ८ अनु. २ सू. १२ मं. १३) यद्वा
या दम्पती समनसा सुनुत आ च धावतः। देवासो नित्ययाशिरा,, ऋ. मंड. ८ सू. ३१ मं. ५

यमिति = विप्राः मेधाविनः ब्राह्मणाः उक्थवाहसः उक्थानां [redacted]शास्त्राणां वोढारः राजर्षयः, आयवः मुक्तिप्राप्तये आयतविचाराः मनुष्याः भक्ताः यं परमात्मानं प्राप्य अभिप्रमन्दुः अभिप्रकर्षेण मन्दुः प्रसीदन्ति इत्यत्र किमु वक्तव्यम्। हे जीवात्मन्! अतः त्वम् ऋतस्य सत्यस्वरूपस्य परब्रह्मणः आसनि आस्ये मुक्तिपदे यत् स्थानं तत् घृतं न शुद्धं घृतमिव पिप्ये सेचनेन वर्धयस्व। अभिप्रमन्दुः = अभि प्रौ उपसर्गौ, मदेर्व्यत्ययेन परस्परं द्विवचनपरेण "छन्दसि वा,, इति वचनात् द्विर्वचनाऽभावः। आसनि = आस्ये = "पद्दन्नो —,, इत्यादिना आस्यशब्दस्य आसन्नादेशः। पिप्ये = प्याय्तेः "छन्दसि लिट्,, "लिड्यङोश्चेति पीभावः १३॥ येति = हे देवासः! हे विद्वांसः या = यौ दम्पती जायापती समनसा = समनस्कौ सुनुतः यज्ञकर्म कुरुतः च यौ दम्पती आधावतः भगवद्भक्तिं प्रति आत्मानौ शोधयतः "धावु गतिशुद्ध्योः यौ च नित्यया आशिरा भगवदाश्रयणेन आश्रयते इति शेषः ॥१५ तथा बृहदा. अ. ४ ब्रा. ४ श्रु. १४ "इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदी महती विनष्टिः। ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवाऽपि यन्ति,,

सम्यग्हितमनसौ

मन्मना इति = मन्मनाः मयि आनन्दात्मके परमात्मनि मनो यस्य स मन्मनाः भव भूपाः। मद्याजी मामेव परमात्मानं यष्टुं शीलमस्येति मद्याजी भव। मामेव कर्मभिः यजस्व। मद्भक्तः सर्वत्र मद्बुद्ध्या मां भजतीति मद्भक्तः भव। तथा मां परमात्मानं नमस्कुरु प्रणामं कुरु वन्दस्व। मत्परायणः अहमेव परम् अयनं प्राप्तिस्थानम् यस्य स मत्परायणः सन् युक्त्वा योगसमाधिं कृत्वा आत्मानं सर्वत्र आत्मस्वरूपत्वेन व्याप्तं मां परमात्मानम् एव एष्यसि प्राप्स्यसि॥ ३४॥ इति श्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां नवमोऽध्यायः समाप्तः। ९।

(मू० गी०) मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ३४
इतिश्रीमद्भगवद्गीतासूपनिषत्सु —— ,, नवमोऽध्यायः समाप्तः ९

(वेदगी०) सं वो मनांसि सं व्रता समाकूतीर्नमामसि। अमी ये विव्रता स्थन तान् वः सं नमयामसि। अथ० कां० ३ सू० ८ मं० ५ (~~अथ० कां० ६ सू० ९४ मं० १~~)

सं व इति = हे मुमुक्षवः! अहं परमात्मा वो युष्माकं (अन्तःकरणानि) मनांसि चित्तानि संनमामसि स्वाऽनुकूलं करोमि अर्थात् युष्माकं मनोवृत्तयः मयि समागच्छन्तु। वो युष्माकं (आचरणानि) व्रता नित्यनैमित्तिकानि कर्माणि संनमामसि स्वाऽनुकूलं करोमि। अर्थात् मद्यजनशीला युष्माकं वृत्तिः सन्तु। वो युष्माकम् आकूतीः संकल्पान् आध्यात्मिकविचारान् संनमामसि स्वाऽनुकूलं करोमि अर्थात् युष्माकं नमस्कृतयः मदनुकूलाः सन्तु। ये च अमी विव्रता विरुद्धकर्मकर्तारः मद्विमुखाः स्थन सन्ति। तान् मद्विमुखान् जनान् वो युष्माकं संमुखे एव संनमयामसि स्वमर्यादास्थापनाय स्वभक्तानां रक्षणाय च तान् सत्कर्मणि नम्रीकरोमि। यथा च तेऽपि मद्भक्ता भवेयुरिति॥ ९॥* इतिश्रीसारस्वतान्वयलैयावास्तव्यन्यायभूषणजगन्नाथशास्त्रिज्योतिर्विद् ओ० टी० कृतायां वेदगीतार्थबोधिन्यां नवमोऽध्यायः समाप्तः॥ ९॥ *मुण्डको० मुं० ३ खं० २ श्रु० ८

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥

(अथ भगवद्गीतादशमाऽध्यायारंभः)

"यस्य निःश्वसितं वेदाः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः पातः कुरुक्षेत्रे युद्धार्णवम्। १
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं न द्वयोः ब्रह्मप्रकीर्तनात्," २

भूय इति। हे महाबाहो! हे अर्जुन! भूयः पुनरपि मे मम परमेश्वरस्य परमम् अत्युत्कृष्टं पारमार्थिकं वचः वचनं शृणु आकर्णय। अहं प्रीयमाणाय श्रवणाय प्रीतिं कुर्वते ते तुभ्यं भक्ताय हितकाम्यया नित्यसुखसम्पादनेच्छया यद्वचः वक्ष्यामि तत् शृणु ॥ १॥

(मू॰गी॰) भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥

(वेदगी॰) आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥९॥
ऋ॰ अष्ट॰ १ अध्या॰ १ व॰ २० मं॰ ९

आश्रुत्कर्णेति = आ समन्तात् श्रुतौ श्रोतारौ कर्णौ यस्य तथाभूतः आश्रुत्कर्णः। तत्संबुद्धौ हे आश्रुत्कर्ण! हे उपदेशश्रवणकर्तः! हे इन्द्र! हे जीवात्मन्! मम परमेश्वरस्य हवं वचनं "ह्वेञ् स्पर्धायां शब्दे च," नु क्षिप्रं श्रुधी शृणु। मे मम परमात्मनः गिरः मदुक्ताः वाणीः दधिष्व चित्ते धारय। "चित् पादपूरणे," मम मदीयं पारमार्थिकम् इमं मया उच्यमानं स्तोमं वाक्यसमूहं युजश्चित् स्वकीयसख्युः मनसः अन्तरम् मध्ये कृष्व कुरु। यथा मदुक्तं वचनं प्रियं मन्यसे तथा मत्कृतिष्व अपि प्रीतिं कुरु इति भावः। आश्रुत्कर्ण! आसमन्तात शृणुत इत्याश्रुत "क्विप्," "ह्रस्वस्य पिति कृति तुक्"। श्रुधी = श्रु श्रवणे लोटो हिः, "श्रुव शृ च," इति विहितश्नोर्बहुलं छन्दसि," इति लुक्। तत्सन्नियोगशिष्टत्वा श्नुभावोऽपि निवर्तते। "श्रुशृणु पृ— ६।४।१०२ इति हेर्धिः। संहितायामन्येषामपि दृश्यते," इति दीर्घः। हवम् = ह्वेञ् स्पर्धायां शब्दे च "बहुलं छन्दसि," इत्यनैमित्तिके सम्प्रसारणे कृते प श्वादुकारान्ते छन्दस्युभयथा," इत्यार्धधातुकस्यापि सीकारादौ आगमः आकारलोपः। कृष्व = डुकृञ् करणे लोट् "थासः से," "सवाभ्यां वामौ," "शपः श्लुः," अभ्यासस्य [illegible] दिः

तुलना = गीतायां भगवान् श्रद्धायुक्तचेतसमर्जुनमुपदेशग्रहणाय सज्जितं, मोहपरित्यागाय भूय उपदिशति।
वेदेऽपि भगवान् मनुष्योऽन्य इदमुपदिदेश, वेदोपदेशः सावधानतया श्रोतव्यः, मनः मध्ये धारयितव्यमित्युपदिदेश

न मे इति = सुरगणाः देवगणाः महर्षयः भृग्व्यासादयः मे मम परमेश्वरस्य प्रभवं प्रभावं सामर्थ्यं न विदुः न जानन्ति। हि यस्मात् कारणात् अहं देवानां महर्षीणां सर्वदा आदिः कारणमस्मि ॥ २ ॥

(मू. गी.) न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वदा ॥ २ ॥
(वेदगी.) न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः।
न प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥ १५ ॥
ऋ. अष्ट. १ अध्या. ७ व. १. मं. १५ ऋ. मं. ३. १ सू. १०. मं. १५

देवता = विभक्तिव्यत्ययः
न यस्येति = यस्य प्रकाशस्वरूपस्य परमात्मनः शवसः बलस्य प्रभवस्य अन्तम् अवसानम् ~~देवा महर्ष्यासादयः विद्वांसः~~ देवता इन्द्रादयो देवाः आपः आप्ताः भृग्व्यासादयो महर्षयः मर्ताः सामान्याः मनुष्याः अन्तम् अवसानम् न आपुः न प्राप्नुवन्ति। मरुत्वान् "मरुतः जीवात्मानः सन्ति, अस्येति मरुत्वान् जीवाऽधिपतिः परमात्मा त्वक्षसा पापानां तनूकर्त्री आत्मीयेन बलेन क्ष्मः पृथिव्याः दिवश्च आकाशस्य च प्ररिक्वा प्रकर्षेण रेचकः वियोगकारकः इन्द्रः परमात्मा नोऽस्माकम् ऊती ऊतये रक्षणाय भवतु। देवता देव एव देवता "देवात्तल्" इति स्वार्थे तल्प्रत्ययः। "सुपां सुलुग्" इति षष्ठ्या लुक्। मर्ताः = मृङ् प्राणत्यागे "असिहसीत्यादिना तन् प्रत्ययः। प्ररिक्वा = रिचिर् वियोगे सम्पर्के च। "अन्येभ्योऽपि दृश्यते" इति क्वनिप् अन्त्यविकारश्छान्दसः। त्वक्षसा = तनूत्वक्षू तनूकरणे। असुन्। क्ष्मः = क्ष्मा इति पृथिवीनाम "आतो धातोरित्यत्र" "आत" इति योगविभागादिष्टसिद्धिरित्यभिधानात्। ङसि भ संज्ञायामाकारलोपः। यद्वा क्ष्मायी विधूनने अस्मात् "क्विप् चेति" क्विप् "वेरपृक्तलोपात् पूर्वं वलिलोपः ॥ १५

उपनिषदि अप्युक्तम् "न तत्र सूर्यो भाति न चन्द्रतारकम्।" "न तत्र चक्षुर्गच्छति न वाग्गच्छति" "अचिन्त्यमनन्तास्य - - - ओं बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति" "न चक्षुषा गृह्यते नापि वाचा" तथा केनोप. खं. २ श्रु. १ यदि मन्यसे सु वेदेति दभ्रमेवाऽपि नूनं त्वं वेत्थ ब्रह्मणो रूपम्। यदस्य त्वं यदस्य च देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम्॥ ३०८

यो मामिति = यः मुमुक्षुः मां परमात्मानम् अजं जन्मरहितम् अनादिम् न विद्यते आदिः उपादानकारणं निमित्तकारणञ्च यस्य सः अनादिः। नित्यः तम् अनादिं नित्यम् लोकमहेश्वरम् यस्य शक्त्या लोकः चेष्टते स ईश्वरः। महांश्चासौ ईश्वरः महेश्वरः लोकस्य महेश्वरो लोकमहेश्वरः तं लोकमहेश्वरं सर्वलोकप्रवर्तकं मां परमात्मानं वेत्ति जानाति। मर्त्येषु सर्वजनेषु असंमूढः पण्डितः ज्ञानी वा, स एव सर्वपापैः सर्वैः पापैः पापकार्यैः दुःखदुर्योनिदुर्गतिभिः प्रमुच्यते प्रकर्षेण विमुक्तो भवति ॥३॥

(मू. गी.) यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम्।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥
(वेदगी.) स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान।
उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत् ॥३॥
ऋ. अष्ट. ३ अध्या. ८ वं. ८ मं. ३ (मं. ३. ४ अनु. ५ सू. ५६ मं. ३) तै. ब्रा. २।८।४।८

न च तेभ्यः स्वयं जातः अतः (परमात्मा) अज इत्युच्यते

स इति = यः परमात्मा इमे परिदृश्यमाने द्यावापृथिवी, जजान उत्पादितवान्। यश्च धीरः धीमान् प्रजापतिः उर्वी उर्व्यौ विस्तीर्णे गभीरे अविचले, सुमेके शोभनरूपे अवंशे (अविद्यमानः वंशः उत्पादकः ययोः ते) उत्पत्तिरहिते रजसी लोकौ (लोकौ) शच्या (स्वशक्त्या) कुशलकर्मणा समैरत् सम्यक् प्रेरितवान् अर्थात् यश्च लोकमहेश्वरः यश्च अनादिः यश्च पृथिव्याद्युत्पादकः स एव परमेश्वरः। इति यः जानाति। स इत् स एव पण्डितः ज्ञानी वा स्वपाः शोभनकर्मा यद्वा सम्यक्तया पापरहितः भुवनेषु भुवनवासिषु सर्वेषु मर्त्येषु आस आस्ते ॥३॥ धियं बुद्धिं राति ददाति इति धीरः पं. १

पं. २ लोका रजांस्युच्यन्ते,

महर्षय इति = पूर्वे सर्वेभ्यः पूर्वतनाः सप्त भृग्वादिवसिष्ठान्ताः महर्षयः । तथा पूर्वे प्राचीनाः चत्वारः सनक सनन्दन सनातन सनत्कुमाराः तथा मनवः स्वयम्भूप्रभृतयः मनवः मानसाः मनः संकल्पमात्रात् जाता उत्पन्नाः सन्तः मद्भावाः मम परमेश्वरस्य स्वरूपत्वेन भाव्यन्ते इति मद्भावाः मम विभूतय इत्यर्थः। लोके संसारे येषां भृग्वादीनां महर्षीणां तथा स्वयम्भ्वादिमनूनाम् इमाः सर्वत्र परिदृश्यमानाः प्रजाः एताः सर्वाः सन्ति । ६ ।

(मू. गी.) महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥

(वेद गी.) एकैकयैषा सृष्ट्या सं बभूव यत्र गा असृजन्त भूतकृतो विश्वरूपाः ॥
यत्र विजायते यमिन्यपर्तुः सा पशून् क्षिणाति रिफती रुशती ॥१॥
अथ. कां. ३ अनु. ६ सू. २८ मं. १

एकैकयेति = एषा विधातृकृता सृष्टिः एकैकया एकैकव्यक्त्या मानसी सृष्टिः सं बभूव प्रादुरभूत । एकैकव्यक्त्युत्पत्तिरेव न्याय्या। यमलजननं तु न तथा इत्यर्थः। यत्र मानसिक सृष्टौ भूतकृतः भूतैः कृताः पार्थिवादिभूतविकाराः विश्वरूपा ~~विश्वरूपाः~~ नानावर्णाः गाः गवोपलक्षिताः मानुषी प्रभृतीः असृजन्त उदपादयन् । सा सृष्टिः मानसी अस्ति न तु मैथुनी । यत्र यस्याम् औत्पत्तिक सृष्टौ ~~अपर्तुः अपर्के पूर्वनीजोपेता सती मानुष्यादि सृष्टिः~~ यमिनी पुरुषसंगता सती अर्थात् मैथुनद्वारा सृष्ट्युत्पादिका सती रिफती कामचेष्टया हिंसन्ती क्रुद्धा सती पशून् " पश्यति धर्मम् इति पशुः ज्ञानी तद्गुणम् ज्ञानं क्षिणोति क्षयं प्रापयति । ~~[illegible]~~ कामवृत्त्या मैथुनी सृष्टिः अन्धीभूताः भवन्तीति भावः ॥१॥
तद्वत् जीवान्

एतामिति= यः बुद्धिमान् मुमुक्षुः मम परमात्मनः एतां पूर्वोक्तां विभूतिं विविधाकारभवनं सर्वोत्तमस्वरूपं योगञ्च सृष्टिस्थितिसंहारादिसामर्थ्यं च तत्त्वतः याथातथ्येन वेत्ति जानाति। स पण्डित एव अविकम्पेन अविचलेन योगेन मदुपासनायोगेन युज्यते सम्बध्यते अत्र अस्मिन् विषये संशयः संदेहः नास्ति ॥७॥

(भ. गी.) एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥७॥
(वेदगी.) एवा हि ते विभूतय ऊतय इन्द्र मावते। सद्यश्चित्सन्ति दाशुषे ॥९॥
ऋ. अष्ट. १ अध्या. १ व. १५ मं. ९ अथ. कां. २० सू. ६० मं. ५

एवेति= हे इन्द्र! हे परमैश्वर्ययुक्तपरमात्मन्! ते तव परमात्मनः विभूतयः विविधाकारभवनानि ऐश्वर्यविशेषा वा एवा हि एवंविधा खलु मावते मत्सदृशाय दाशुषे यजमानाय मुमुक्षवे भक्ताय सद्यश्चित् सर्वदाकाले ऊतयः संसारार्णवात् रक्षारूपाः सन्ति भवन्ति। मावते= वतुप्प्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानम्" इत्यस्मच्छब्दात् वतुप्। "म पर्यन्तस्य प्रत्ययोत्तरपदयोश्च" इति मादेशः। अद् शब्देन सहातो गुणे इति पररूपत्वम्। इमदृशवतुष्विति अनुवृत्ता वा सर्वनाम्नः" इति दकारस्य आकारः सवर्णदीर्घत्वम्। सद्यः= समाने द्यवि इत्यर्थे सद्यः "पद्यत्परायैषमः" इत्यादिना निपातितम्। दाशुषे= दाशृ दाने। दाश्वान्साह्वान्मीढ्वांश्च" इति निपातनात् क्वसाविड्भावो द्विर्वचनाऽभावश्च। चतुर्थ्येकवचने यचि भं इति भसंज्ञायां वसोः संप्रसारणम्" इति संप्रसारणम्। वकारस्याकारः परपूर्वत्वम्। "शासिवसिघसीनाञ्च" इति षत्वम् ९॥

अहमिति= अहं परमात्मा सर्वस्य जगन्मात्रस्य प्रभवः उत्पत्तिस्थानमस्मि। मत्तः परमात्मनः सकाशात् सर्वं संसारसर्गादि के प्रवर्तते प्रवृत्ति निवृत्तौ मत एव सिध्यतः। सर्वकारणं परमेश्वर इति मत्वा बुद्ध्वा भावसमन्विताः मद्भावनायुक्ता बुधाः मुमुक्षवः मां परमात्मानं भजन्ते उपासते इति ॥ ८ ॥

(मू.गी.) अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥
(वेदगी.) तमु ष्टवाम य इमा जजान विश्वा जातान्यवराण्यस्मात्।
इन्द्रेण मित्रं दिधिषेम गीर्भिरुपो नमोभिर्वृषभं विशेम ॥ ६ ॥
ऋ. अष्ट. ६ अध्या. ६ व. ३३ मं. ६ (मं. ८ अनु. ९ सू. ९६ मं. ६)

तमिति= यः परमात्मा इमा इमानि भूतानि जजान जनयामास। अस्मात् परमात्मनः विश्वा विश्वानि सर्वाणि वस्तूनि वस्तुजातानि जगन्ति वा अवराणि अवरकालीनानि पश्चाद्भूतानि जातानि प्रादुर्भूतानि सन्ति। तमु तमेव परमात्मानं वयं मुमुक्षवः स्तवाम स्तुतिं करवाम। वयम् इन्द्रेण परमैश्वर्यवता परमात्मना गीर्भिः स्तुतिभिः मित्रं "लुप्तमत्वर्थीयप्रत्ययेन निर्देशः" मित्रं = मैत्री दिधिषेम = धारयेम। दिधिष धारणे इति धातुं केचिद्वदन्ति। यद्वा मित्रं छान्दसमेकवचनम्। वयम् इन्द्रेण परमात्मना सह परम मित्राणि सुहृदो भवामेति गीर्भिः परमात्मानं दिधिषेम शब्दयेम। धिष् शब्दे जौहोत्यादिकः अत्र व्यत्ययेन द्विविकरणता श्लुश्च शप् च। अतः नमोभिः क्रियमाणैः नमस्कारैः वृषभं कामानां वर्षयितारं सर्वोत्तमं पुरुषोत्तमम् उपो विशेम स्वाऽभिमुख्येन कुर्याम। मन्त्रान्तरं यथा "अहं जजान पृथिवीमुत द्यामहमृतूँरजनयं सप्त सिन्धून्। अहं सत्यमनृतं यद्वदामि अहं दैवीं परि वाचं विशश्च ॥ ६ ॥" अथ. कां. ६ सू. ६१ मं. २ अहं परमात्मा पृथिवीं भूमिं उत= अपि च द्याम् आकाशं अर्थात् समग्रं विश्वं जजान उत्पादितवानस्मि। अहं सप्त ऋतून् ऋतुसंज्ञकान् कालान् सप्त सिन्धून् सप्त समुद्रान् अजनयम् उत्पादितवानस्मि। अहं सत्यं सत्यात्मिकां वाचं अनृतम् असत्यात्मिकां वाचं वेदे प्रतिपाद्ये वदामि उपदिशामि अग्निसोमौ जीवात्मपरमात्मानौ सखायौ भक्त्या ज्ञानेन वा समानख्यानौ भजवे परस्परं संयोजयामि ॥ २ यद्वैतोपे प. खं. १ श्रु. १, २ "स ऐक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" 

मच्चित्तेति = मच्चित्ताः मयि परमात्मनि चित्तं मनो येषां ते मच्चित्ताः। मद्गतप्राणाः मयि परमात्मनि गताः प्राणाः वागादीन्द्रियाणि येषां ते मद्गतप्राणाः बुधाः मुमुक्षवः परस्परं मिथः बोधयन्तः ब्रह्मसम्बन्धिनी वार्तां बोधयन्तः तथा परस्परं मां परमात्मानं नित्यं सर्वदा कथयन्तः वदन्तः सन्तः तुष्यन्ति आनन्दन्ति रमन्ति-च काले नयन्ति च ॥९॥

(मू. गी.) मच्चित्ता मद्गतप्राणाः बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥

(वेदगी.) ते हि सत्या ऋतस्पृशं ऋतावानो जनेजने।
सुनीथासः सुदानवोंहोश्चिदुरुचक्रयः ॥४
ऋ: अष्ट. ४ अध्या. ४ व. ५ मं. ४ (मंड. ५ अनु. ५ सू. ६७ मं. ४)

ते हीति = ते मुमुक्षवः जनाः "हीति निश्चये" सत्याः सत्ये ब्रह्मणि स्थिताः, सत्यफला वा। ऋतस्पृशः = ऋतं ब्रह्म वागादिभिः स्पृशन्ति ऋतस्पृशः मद्गतप्राणाः। ऋतावानः सर्वं ब्रह्ममयं पश्यन्तः। जनेजने सर्वेषु मनुष्येषु सुदानवः परमात्मसंबन्धिन्याः वार्तायाः दानशीलाः सन्तः। यद्वा जने जने ब्रह्मज्ञानसम्बन्धिदानं येषां ते सुदानवः। अत एव सुनीथासः प्रशस्याः सन्तः "सुनीथस्य प्रशस्ये पाठः (निघं. ३।८) अंहोश्चित् चित् = अप्यर्थे। पापिनोऽपि मद्ध्यानमात्रात् एव उरुचक्रयः = प्रशस्यकर्मकर्तारः भवन्तः स्वस्वकालम् आनन्देन नयन्ति ॥ ४॥

तेषामिति = सततयुक्तानां सततं नित्यं युक्तानां परमात्मभक्तौ लग्नानां प्रीतिपूर्वकं स्नेहपूर्वकं भजतां ध्यायतां तेषां मुमुक्षूणाम् अहं परमात्मा बुद्धियोगं बुद्धिः स्वरूपज्ञानं सैव योगः बुद्धियोगः, तं ददामि प्रयच्छामि। येन मत्प्रदत्तेन बुद्धियोगेन ते बुधाः भक्ताः मां परमात्मानम् उपयान्ति प्राप्नुवन्ति ॥१०॥

(मू. गी.) तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०

(वेद गी.) तेषां सर्वेषामीशाना उत्तिष्ठत संनह्यध्वं मित्रा देवजना यूयम्।
इमं संग्रामं संजित्य यथालोकं वितिष्ठध्वम् ॥२६॥
अथ. कां. ११ अनु. ५ सू. ९ मं. २६

तेषामिति = हे मित्राः! हे समदृष्ट्या सर्वेषां सुहृदः! हे देवजनाः! हे भगवद्भक्ताः! हे बुधाः। यूयं मुमुक्षवः तेषां सर्वेषां सकलानां कामक्रोधादि शत्रूणाम् ईशानाः स्वामिनः शिक्षकाः सन्तः उत्तिष्ठत उत्थिता भवत। संनह्यध्वम् तेषां शिक्षणाय उत्थाय संनद्धा भवत। तथा यूयम् इमं संमुखस्थं संग्रामं संसारयुद्धं संजित्य सम्यक्तया जित्वा कामक्रोधादि शत्रून् निरस्य। भगवद्भक्तिं स्वं कृत्वा यथालोकं मद्भक्तिप्रभावेण यथाध्यानं मुक्तिधाम वितिष्ठध्वम् ~~मद्भक्त~~ स्थितिं कुरुत। वितिष्ठध्वम् = "समवप्रविभ्यः स्थः" इत्यनेपदम् ॥२६॥

तेषामिति = आत्मभावस्थः आत्मा अन्तःकरणं तस्य भावः वृत्तिः, तत्र प्रत्यगूपेण तिष्ठतीति आत्मभावस्थः प्रत्यग्वृत्तौ आविर्भूतः सन् अहं परमात्मा तेषां मद्‌जनैकनिष्ठानां भक्तानाम् अनुकम्पार्थम् अनुकम्पा दया तदर्थं भास्वता प्रकाशमानेन ज्ञानदीपेन ज्ञानम् एव दीपः ज्ञानदीपस्तेन तेन ज्ञानदीपेन अज्ञानजम् अज्ञानात् जातं तमः आवरणात्मकम् अविद्याऽन्धकारम् नाशयामि विध्वंसयामि ॥१०

(मू० गी०) तेषामेवाऽनुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

(वेद० गी०) मैतं पन्थामनु गा भीम एष येन पूर्वं नेयथ तं ब्रवीमि।
तम एतत् पुरुष मा प्र पत्था भयं परस्तादभयं ते अर्वाक् ॥१२॥
अथ० कां० ८ सू० १ मं० १०

मैतमिति = हे पुरुष! हे मुमुक्षुजन!!! एतम् अज्ञानावृतं पन्थाम् पन्थानम् मार्गं तमोमार्गं माऽनुगाः मा याहि। भीमः भयानकः एषः मार्गः अस्ति। येन ज्ञानमार्गेण पूर्वे पूर्वे पुरुषं विद्वांसः नेयथ प्राप्नुवन्ति। "नेयथ इत्यत्र पुरुषव्यत्ययः। तं मुक्तिसाधकं ज्ञानमार्गं त्वदनुकम्पार्थं ब्रवीमि परमात्माऽहं स्वयं कथयामि। एतत् संसारप्रापकम् तमः आवरणात्मकम् ~~[illegible]~~ अज्ञानं मा प्रपत्था मा प्राप्नुहि। ~~अज्ञानाश्रयात्~~ ज्ञानाश्रयाच्च परस्तात् अप्रत्यक्षेऽपि ते तुभ्यं अभयं भयं माऽस्तु। अर्वाक् संमुखेऽपि ते तुभ्यम् अभयम् भयं माऽस्तु ॥१०

परं ब्रह्मेति-हे भगवन् कृष्ण! भवान् परं ब्रह्म प्रकृतेः परं सर्वव्यापकं ब्रह्म भवान् परं धाम मुक्तिधाम। भवान् परमम् अत्युत्कृष्टं पवित्रं पावनम् अस्ति। देवर्षिः नारदः, असितः, देवलः, व्यासः इत्यादयः सर्वे ऋषयः शाश्वतं नित्यं दिव्यं दिवि स्वे महिम्नि स्थातुं योग्यं दिव्यम् आदिदेवम् सर्वेषां कारणभूतः देवः द्योतनशीलः, स चासौ देवः आदिदेवः तम् आदिदेवम् अजं जन्मरहितं विभुं व्यापकम् त्वाम् आहुः कथयन्ति। स्वयं चैव त्वमपि मे मह्यं ब्रवीषि कथयसि ॥११, १२।

(अर्जुन उवाच)

(मू. गी.) परं ब्रह्म परं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् १२
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे १३

(वेद गी.) अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥१४
ऋ. अष्ट. २ अध्या. ३ व. १४ मं. १ (मं. १ अनु. २२ सू. १६४ मं. १४)
अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन्।
अपृच्छमन्याँ उत ते म आहुरिन्द्रं नरो बुबुधाना अशेम ॥२॥
ऋ. अष्ट. ४ अध्या. १ व. २६ मं. २ (मं. ५ अनु. २ सू. ३ मं. २)

अस्येति-अस्य वामस्य विश्वस्य स्रष्टुः सेवनीयस्य वा पलितस्य पालयितुः स्वसृष्टजगत्पालनशीलस्य होतुः आदातुः स्वस्मिन् धामनि संहर्तुरित्यर्थः। परमेश्वरस्य सृष्ट्यादिकर्तृत्वं श्रुतिस्मृत्यादिशास्त्रेषु प्रसिद्धं तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानः अस्ति, जगद्धारकत्वेन वर्तते। स च अश्नः व्यापनशीलः अस्ति। अस्य परमेश्वरस्य तृतीयः घृतपृष्ठः घृतं प्रदीप्तं पृष्ठं स्पर्शनीयं स्पर्शकं वा यस्य तादृशः। "पृष्ठं स्पृशतेः" इति यास्कः। पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः प्रकाशितशरीरः। अत्र एषु मध्ये विश्पतिं विशां प्रजानां पतिं सर्वस्य पतिमित्यर्थः। सर्वस्य पतिः सर्वस्येशान इति श्रुतेः। सप्तपुत्रं सप्तलोकाः पुत्रा यस्य तादृशं स्वमायया

~~सहस्त्रसर्वलोकैम अपश्यम् पश्येयम्~~ अहं मुमुक्षुः ~~साक्षात्करोमि~~ ॥ १४ ॥
अवाम्नवक्षमिति = अस्य परमात्मनः सत्त्वः अन्तर्हितं परमं गुर्ह्यम् अग्रे सर्वोत्कृष्टं पदं परमं धाम अवाच्चचक्षाम् अहं मुमुक्षुः अवाद्राक्षम् । इच्छन् परं ब्रह्म स्वरूपं ज्ञातुम् इच्छन् अहं निधातुः स्वमहिम्ना जगतः स्थापयितुः परब्रह्मणः पदम् अन्वायम् अन्वगच्छम् । अन्यान् उत अन्यान् देवर्षीन् नारदव्यासादीन् अपि ~~परमात्मप्राप्ते मार्गं~~ परमात्मस्वरूपं वा अपृच्छम् पृष्टवानस्मि । ते नारदादयः ऋषयः पृष्टाः मे मह्यम् इन्द्रं परं ब्रह्म आहुः कथयन्ति । नरः ज्ञानिनां नेतारः बुबुधानाः परमात्मस्वरूपं बुभुत्समानाः वयं मुमुक्षवः अपि अशेम परमात्मस्वरूपं प्राप्नुयाम ॥ २ ॥

सर्वमिति = हे केशव! त्वं परब्रह्मत्वं यत् मां प्रति वदसि कथयसि। अहमेतत् सर्वम् ऋतं सत्यमेव मन्ये मननं करोमि। हे भगवन्! हि यतः ते तव परमात्मनः व्यक्तिं व्यज्यते सर्वं सृष्टा इति व्यक्तिः यद्वा व्यञ्जयति सर्वं जगदिति व्यक्तिः तां त्वत्स्वरूपं देवाः दानवाः न विदुः न जानन्ति ।।१४।।

(मू. गी.) सर्वमेतदृतं मन्ये यन्मां वदसि केशव! ।
नहि ते भगवन् व्यक्तिं विदुर्देवा: न दानवा: ।।१४।। स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम! भूतभावन भूतेश देवदेव जगत्पते! ।।१५।।
(वेदगी.) मूरा अमूर न वयं चिकित्वो महित्वमग्ने! त्वमङ्ग वित्से ।। ४ ऋ. मं. १० सू. ४ मं. ४
(यद्वा) न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप।
उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ।। २ ऋ. मं. ७ सू. ९९ मं. २
मूरा इति = हे अमूर! हे अमूढ! हे सर्वज्ञ! हे अग्ने! परमात्मन्! मूराः मूढाः मोहिता अविवेकिनो वयं तव महित्वं महत्वं न चिकित्वः न विद्मः। त्व महत्त्वं त्वं वित्से वेत्थ। यथा च यास्क आह "मूढा वयं स्मोऽमूढस्त्वमसि न वयं विद्मो महत्त्वमग्ने! त्वं तु वेत्थ"।।४।। हे अग्ने! हे परमात्मन् (यद्वा)
न ते इति = हे विष्णो! हे सर्वव्यापक परमात्मन्! त्वम् ऋष्वं दर्शनीयं बृहन्तं महान्तं नाकं द्युलोकम् उदस्तभ्नाः ऊर्ध्वम् अधारयः। तथा पृथिव्याः भूमेः सम्बन्धिनीं प्राचीं प्राच्यादि सकलां ककुभं दिशं दाधर्थ धारितवान् असि। हे देव! ज्योतिःस्वरूप परमात्मन्! ते तव पूर्वं प्रतिपादितस्य महिम्नः महत्त्वस्य परं विप्रकृष्टम् अन्तम् अवसानं जायमानः उत्पद्यमानः ~~[illegible]~~ मनुष्यः न आप न प्राप्नोति ~~[illegible]~~ यद्वा जातः प्रादुर्भूतः देवादिः अपि अन्तं न आप न प्राप्नोति। अतः तव महत्त्वस्य अवसानम् नास्ति। तव व्यक्तिः केनाऽपि न ज्ञायते त्वं स्वं स्वयमेव जानासीति भावः।

स्वयमिति = हे भूतभावन! भूतानि पृथिव्यादीनि भावयतीति भूतभावन! हे भूतेश! भूतानां पदार्थमात्राणाम् ईशः स्वामीति भूतेशः तत्सम्बुद्धौ हे भूतेश! हे भूतस्वामिन्। हे देवदेव! देवान् अग्न्यादीन् देवयति प्रकाशयतीति देवदेवः! तत्सम्बुद्धौ हे देवदेव! हे जगत्पते! जगत् सर्वं पातीति जगत्पतिः जगत्स्वामी तत्सम्बुद्धौ हे जगत्पते! हे पुरुषोत्तम! हे परमात्मन्! स्वयमेव त्वम् आत्मना स्वस्वरूपेण आत्मानं वेत्थ जानासि न त्वन्यः अल्पज्ञः कश्चित् ॥१५॥ वक्तुमिति = हे भगवन्। दिव्याः तेजोमयाः या आत्मविभूतयः स्वमहत्त्वविस्ताराः सन्ति। ताः विभूतीः अशेषेण सम्पूर्णतया त्वं वक्तुं कथयितुम् अर्हसि त्वं याभिः विभूतिभिः आत्मनः विविधैः भावैः इमान् सम्मुखस्थान् लोकान् मर्त्यादीन् व्याप्य आपूर्य तिष्ठसि ।१६॥ ~~विस्तरेणेति = हे जनार्दन! हे विष्णो! आत्मनः पर~~ कथमिति = हे योगिन्! हे ऐश्वर्यवन्! त्वां परमात्मानं परिचिन्तयन् सदा ध्यायन् अहं भक्तः त्वां निर्विशेषं परं ब्रह्म कथं केन प्रकारेण विद्यां जानीयाम्। हे भगवन्! मया केषु केषु भावेषु पदार्थेषु चिन्त्यः ध्येयः असि ॥१७॥ विस्तरेणेति = हे जनार्दन हे विष्णो! आत्मनः परमात्मनः योगम् ऐश्वर्यविशेषं विभूतिश्च स्वमहत्त्वविस्तारश्च भूयः पुनः विस्तरेण नामरूपविस्तरेण कथय वद। हि यतः अमृतं ज्ञानामृतवचनं शृण्वतः मे मम भक्तस्य तृप्तिः परिपूर्तिः नास्ति न विद्यते ।१८ हन्तेति = हन्त खेदे हे कुरुश्रेष्ठ! हे अर्जुन दिव्या दिव्यगुणयुक्ता अप्राकृताः आत्मविभूतयः स्वस्वरूपविशेषाः याः सन्ति। ताः विभूतीः प्राधान्यतः मुख्यतया ते तुभ्यं कथयिष्यामि वदिष्यामि। मे मम विभूतीनां विस्तरस्य बहुत्वस्य अन्तः समाप्तिः नास्ति ॥१९।

(मू. गी.) ~~स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम। भूतभावन भूतेश देवदेव जगत्पते~~। १५।
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः। याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि १६
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन्। केषु केषु भावेषु चिन्त्योऽसि भगवन् मया। १७।
विस्तरेणात्मनो योगं विभूतिं च जनार्दन। भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥
श्रीभगवानुवाच
हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः। प्राधान्यतः कुरुश्रेष्ठ! नास्त्यन्तो विस्तरस्य मे १९
. . . . . . . . . . . .
(वेदगी.) . . . . . . . — . . . . . . . .

. . . . . . . . . . . . . .

अहमिति = हे गुडाकेश! गुडाका निद्रा तस्य ईशः स्वामी गुडाकेशस्तत्संबुद्धौ हे गुडाकेश! हे अर्जुन! सर्वभूताशयस्थितः सर्वप्राणिगुहास्थितः आत्मा प्रत्यगात्मा अहमस्मि। अहं भूतानाम् आकाशादीनाम् आदिः मूलकारणं मध्ये स्थितिः अन्तः प्रलयः अहमस्मि ॥२०॥

(मू. गी.) अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥

(वेदगी.) स एव मृत्युः सोऽमृतं सोऽभ्वं स रक्षः ॥२५
स रुद्रो वसुवनिर्वसुदेये नमोवाके वषट्कारो नु संहितः ॥२६॥
अथ. कां. १३ सू. ४. मं. २५, २६

स एवेति = सोऽहं परमात्मा एव मृत्युः सर्वेषां प्राणिनां मध्ये तिष्ठन् दण्डदायकोऽस्मि यद्वा तत्तद्देहात् पृथक्कर्ताऽस्मि। सोऽहमेव अमृतम् सर्वेषां प्राणप्रदः आत्माऽस्मि। सोऽहम् अभ्वम् उत्पत्तिरहितोऽस्मि सर्वेषामादिरस्मीति भावः। सोऽहमेव रक्षः सर्वेषां स्थावरजंगमानां रक्षकः स्थापकोऽस्मि मध्यवर्ती अपि अहमेवाऽस्मि इति भावः। सोऽहं रुद्रः अन्तकः विनाशकोऽस्मि। सोऽहं वसुवनिः सर्वेषां वासभूतः सर्वभूताशयस्थितोऽस्मि। सोऽहमेव वसुदेये यज्ञादौ देये पदार्थे नमोवाके नमस्करणीये ब्रह्मयज्ञे वषट्कारः नमः स्वाहा वषट् वौषड् इत्याद्याकारवान् सन् अनुसंहितः सततमनुसन्धीयते अनुस्मर्यते इतिभावः ॥२५।२६

यथा तैत्ति. भृगुवल्ली अध्या. ३ अनु. १ "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति,

आदित्यानामिति = आदित्यानाम् अखण्डनीयानां पदार्थानां मध्ये अहं विष्णुः सर्वत्र व्याप्तः परमात्माऽस्मि ॥

(मू. गी.) आदित्यानामहं विष्णुः ।

(वेदगी.) विष्णुं युनक्तु बहुधा तपांस्यस्मिन् यज्ञे सुयुजः स्वाहा,,

अथ. कां. ५ सू. २६ मं. ८ आदित्यो वै विष्णुः,, गो.

ऋतेना ~~आ~~(यद्वा) दित्यास्तिष्ठन्ति, ऋ. मं ३. १० सू. ८५ मं. १
सोमेना आदित्या बलिनः,, ऋ. मं १० सू. ८५ मं. २

विष्णुरिति = हे सुयुजः ! सम्यग् योगाऽभ्यासकर्तारः ! मुमुक्षवः । अस्मिन् यज्ञे विभूतिसमूहयज्ञे विष्णुः ~~सर्वव्यापकः~~ विष्णुरूप आदित्यः ! परमात्मा तपांसि आदित्यात्मकतपःकर्माणि बहुधा बहुप्रकारं युनक्तु त्वयि मुक्तौ संयोजयतु स्वाहा सम्यक्रियाऽऽज्ञानमस्ति ॥ ८

यथा ब्राह्मणे "आदित्यो वै विष्णुः,, हरिवंश पं. १ अध्या. ३ श्लो. ५९ "मरीचात् कश्यपाज्जातास्त आदित्या दक्षकन्यया । तत्र शक्रश्च विष्णुश्च जज्ञाते पुनरेव हि,, "अर्यमा चैव धाता च त्वष्टा पूषा च भारत । विवस्वान् सविता चैव मित्रो वरुण एव च २ अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः,,

ज्योतिषामिति = ज्योतिषां प्रकाशवतां पदार्थानां मध्ये अंशुमान रश्मिवान रविः सूर्यः अहमस्मि ॥

(मू॰ गी॰) ज्योतिषां रविरंशुमान ॥
(वेदगी॰) यो अदधाज्ज्योतिषि ज्योतिरन्तर्यो ऽसृजन्मधुना सं मधूनि ।
ऋ॰ अष्ट॰ ८ अध्या॰ १ व॰ १५ मं॰ ६ ऋ॰ मंड॰ १० सू॰ ५४ मं॰ ६
सूर्यश्चाहं ,, ऋ॰ मं॰ ४ सू॰ २६ मं॰ १ यद्वा नूतनः मंत्रः
अहं सूर्य इवाजनि ,, अथ॰ कां॰ २० सू॰ ११५ मं॰ १

~~ज्योतिषामिति~~ =
य इति = यः परमात्मा ज्योतिषि अग्न्यादिज्योतिःपदार्थे अन्तः मध्ये ज्योतिः प्रकाशमयं तेजः अदधात् धारितवान् यत् रव्यादिषु तेजोऽस्ति तत्परमात्मविभूतिरेव । यश्च मधुना स्वस्वकार्यसम्पादनाय सेव्यमानेन आदित्येन रविणा इतीयावत् सह मधूनि उदकानि समसृजत् ॥ ६ ॥ यद्वा "अहं परमात्मा सूर्यः रविः अभवम् अस्मि ,, १ यद्वा "अहं परमात्मा सूर्य इव सूर्य एव अजनि [redacted] भवामि ॥ १

मरीचिरिति = मरुतां वायूनां मध्ये मरीचिः नाम वायुः अस्मि ॥

(मू. गी.) मरीचिर्मरुतामस्मि ।

(वेदगी.) वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् । अस्मे वृद्धा असन्निह ।
ऋ. अष्ट. १ अध्या. ३ व. १८ मं. १५ मं. १ सू. ३८ मं. १५
नमो वात्याय रेष्म्याय च = यजुः १६ । ३९

वन्दस्वेति = हे मुमुक्षो! मारुतं मरुतां श्रेष्ठं मरीचिनामकं मरुतं यद्वा मरुत्संबन्धिनं मरीचिनामकं प्रभुविभूतिं वन्दस्व नम स्कुरु । स्तुहि । कीदृशं तं, त्वेषं दीप्तम् । पनस्युं स्तुतियोग्यम् । अर्किणम् = अर्चनोपेतम् । अस्मे अस्माकम् इह अस्मिन् नमस्कारकर्मणि वृद्धा प्रवृद्धाः सश्रेष्ठा असन् सन्ति । वन्दस्व = वदि अभिवादनस्तुत्योः । पनस्युम् = पन चेति स्तुत्यर्थो धातुः । असुन् प्रत्ययः । पनः स्तोत्रमिच्छतीति पनस्युः । सुप आत्मनः क्यच् । क्याच्छन्दसि, इत्युः प्रत्ययः । अर्किणम् = ऋच स्तुतौ "पुंसि संज्ञायामिति घः अर्कः, स्याऽस्तीति अर्की "अत इनिठनौ" ॥ असन् = बहुलं छन्दसीति शपो लुगभावः । "इतश्च लोपः" इतीकारलोपः १५

नक्षत्राणामिति = नक्षत्राणाम् अश्विनीभरण्यादिनक्षत्राणां मध्ये शशी चन्द्रमा अहमस्मि ॥ २१ ॥

(मू. गी.) नक्षत्राणामहं शशी ॥ २१ ॥

(वेदगी.) चन्द्रमा नक्षत्राणामधिपतिः स मामवतु ॥ अथ. कां. ५ सू. २४ मं. १० पढ़ो
चन्द्रमा नक्षत्राणामीशे = अथ. कां. ६ अनु. १ सू. ८६ मं. २

चन्द्रमा इति = चन्द्रमाः शशी नक्षत्राणाम् अश्विनीभरणीप्रभृतितारागणानाम् अधिपतिः स्वामी अस्ति। अतः स शशी परमात्मनः विभूतिः मां मुमुक्षुजनम् अवतु रक्षतु ॥ १० चंद्रमा नक्षत्राणाम् अश्विन्यादि नक्षत्राणां ईशे

रुद्राणामिति = रुद्राणां ~~स्कन्द~~ क्रोधरूपाणां मध्ये यद्वा एकादशरुद्राणां मध्ये यद्वा रुद्राः प्राणाः रुद्राणां रोदयितॄणां प्राणानां मध्ये शङ्करः कल्याणकरः शङ्करनामा वाऽहमस्मि।

(मू. गी.) रुद्राणां शङ्करश्चास्मि।

(वेदगी.) रुद्राणां मेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः।
इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे॥ ऋ. अष्ट. १ अध्या. ५ व. १२ मं. ८
(यद्वा)
रुद्राणामाधिपत्यम् — यजुः १४।२५ "नमः शंकराय च,

रुद्राणामिति = विचक्षणः स्वतेजसा प्रकाशमानः शिवः विविधप्रकारेण ज्ञानानां द्रष्टा भगवद्विभूतिः शिवः (शंकरः) रुद्राणां रोदयितॄणां प्राणानां मध्ये प्रदिशा मनुष्येभ्यः सुखप्रदानेन सह एति प्राप्नोति। योषा माध्यमिका वाक् रुद्रेभिः वर्तमानैः प्राणैः पृथु विस्तीर्णं ज्रयः ज्रीयते अभिभूयतेऽनेनेति ज्रयः वेगः तत् ज्रयः वेगं तनुते विस्तारयति। मनीषा भगवत्स्तुतिलक्षणा वाक् मरुत्वन्तं मरुद्भिः स्तुतिभिः स्वस्तोतृभिः सह वर्तमानं "मरु" शब्दस्य ऋत्विक्षु पाठात् (निघं. ३।१८) श्रुतं सर्वत्र प्रख्यातम् इन्द्रम् परमैश्वर्यवन्तं परमात्मानम् अभ्यर्चति आभिमुख्येन स्तौति। एवंविधम् इन्द्रं सख्याय सहभवनाय सायुज्यमुक्तये हवामहे आह्वयामहे। प्रदिशा = दिश् अतिसर्जने सम्पदादिलक्षणे भावे क्विप्। ज्रयः = ज्रि अभिभवे। करणेऽसुन्। ~~मनीषा~~ ॥ यद्वा रुद्राणां दशप्राणाः एकादशः जीवः तेषाम् एकादशरुद्राणाम् आधिपत्यम् स्वामित्वं शङ्करस्य परमात्मनः एवाऽस्ति। ८।

वित्तेश इति। यक्षरक्षसां मध्ये वित्तेशः धनस्वामी कुबेरोऽहमस्मि ॥

(मू. गी.) वित्तेशो यक्षरक्षसाम् ॥
(वेद गी.) तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम् ॥
अथ. कां. ८ अनु. ५ सू. १० मं. १०
श्रीणामुदारो धरुणो रयीणाम् ॥ ऋ. मं. १० सू. ४५ मं. ५

तस्या इति = तस्याः यक्षरक्षःसृष्ट्याः मध्ये वैश्रवणः विश्रवसोऽपत्यं वैश्रवणः कुबेर एव वत्सः भगवत्प्रियः अतः विभूतिश्चासीत्
आसीत् । ~~[illegible]~~ आमपात्रम् ईषत्पक्वं पात्रं बुद्धिर्यस्य तथाभूतं पात्रं ब्राह्मणः। ब्राह्मणं पात्रमित्याहुः ,, इत्युक्तेः तद्विभूतिसेवकः
स्यादिति भावः। वैश्रवणः = विश्रवसोऽपत्यम् = अण् विश्रवणादेशः। कुबेरः = एरक् नलोपश्च ॥ आमपात्रम् = अम्यते पच्यते
अ + अम् + घञ्। पाति रक्षति आधेयम् ष्ट्रन् प्रत्ययः।

वसूनामिति = वसूनाम् अष्टविधानां वसूनां मध्ये पावकः पवित्रकर्ता अग्निः अहमस्मि ॥

(मू॰ गी॰) वसूनां पावकश्चाऽस्मि।
(वेदगी॰) शुचिः पावकः ईड्यः - अथ॰ कां॰ २ सू॰ ३ मं॰ २६ यद्वा।
"वसूनां भागोऽसि—" यजुः १४।२५ यद्वा
"अग्निरस्मि जन्मना जातवेदाः — ऋ॰ अष्ट॰ ३ अध्या॰ १४, २५ मं॰ ५
उशिक् पावको अरतिः सुमेधा मर्त्येष्वग्निरमृतो निधायि, ऋ॰ मं॰ १ सू॰ ४५ मं॰ ८

शुचिरिति = सः परमेश्वरः वसूनां मध्ये पावकः पावकनाम्ना शुचिः शुद्धः ईड्यः स्तुत्यः वर्तते ॥ २६ यद्वा
वसूनामिति = वसूनाम् "अष्टौ वसवः" "अग्निश्च पृथिवी च, वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः" एते हीदं सर्वं वासयन्ते" शत॰ ११।६।३।६ वसूनाम् अष्टविधानां वसूनां मध्ये भागः भजनीयः अग्निः असि २५ यद्वा
अहं परमात्मा जन्मना श्रवणमननादिसाधननैरपेक्ष्येण स्वभावत एव जातवेदाः समस्तपदार्थज्ञाता वसूनां मध्ये अग्निरस्मि,

मेरुरिति = शिखरिणां शिखरं रत्नभेदः रत्नवतां मध्ये मेरुः रत्नम् अहमस्मि ।२३॥

(मू. गी.) मेरुः शिखरिणामहम् ।२३॥

(वेदगी.) अमृतासुर्व्रतं एमि कृण्वन्नसुरात्मा तन्वस्तत् सुमद्गुः ।
उत वा शक्रो रत्नं दधात्यूर्जया वा यत्सचते हविर्दाः ॥ अथ. कां. ५ सू. १ मं. ८

अमृतासुरिति = आत्मा मुमुक्षुरात्माऽहम् अमृतासुः अमृते परमात्मा स एव असुः प्राणः आश्रयो यस्य तथाभूतः अमृतासुः ईश्वराश्रयः। व्रतः नामव्रतासक्तः। तन्वः शरीरस्य असुः क्षेपकः तिरस्कर्ता देहासक्तिशून्यः सन् सुमद्गुः = सु सम्यक् रूपेण मुदः प्रसन्नाः गावः इन्द्रियाणि यस्य तथाभूतः सुमद्गुः सम्यक् प्रसन्नेन्द्रियः जितेन्द्रिय इति भावः। कृण्वन् निःसंगं नित्यं नैमित्तिकं कर्म कुर्वन् तत् रत्नं रत्नेषु रत्नभूतम् परमात्मानं शरणं एमि प्राप्नोमि। उत वा अपि च शक्रः ऊर्जया प्रकृष्टया भक्त्या शक्तिशाली अयम् आत्मा एव रत्नं सर्वरत्नमेरुस्वरूपं परंब्रह्म चित्ते दधाति धारयति। यत् = येन हेतुना स च मुमुक्षुः हविर्दाः प्राणापानादिकं हविः आत्मतानाग्नौ जुह्वन् ऊर्जया परया भक्त्या सचते मोक्षं प्राप्नोति ॥८॥

पुरोधसामिति = हे पार्थ ! हे पृथासुत ! हे अर्जुन ! पुरोधसां पुरः अग्रे धीयते इति पुरोधा । "धा धातोः असि किच्च" तेषां पुरोधसाम् अग्रे स्थापितानां मध्ये मुख्यं सर्वोत्तमं मां परमात्मानं बृहस्पतिं बृहताम् इन्द्रियाणां पतिः पालकः नियन्ताऽन्तरात्मा इति बृहस्पतिः । यद्वा बृहत्याः वाचः पतिः बृहस्पतिः तं बृहस्पतिं मां विद्धि जानीहि ॥

(मू. गी.) पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥

(वेद गी.) सोमं राजानं वरुणमग्निमन्वारभामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ साम. १ अध्या. खं. १०. मं. १
ऋ. मंड. १०. सू. १४१ मं. ३ । यजुः ९।२६ अथ. कां. ३ सू. २०. मं. ४

"बृहस्पतिर्वै देवानां पुरोहितः" । बृहस्पतिं यं सुभृतं बिभर्ति, ऐतरे. ब्रा.

सोममिति = राजानम् राजमानम् ईश्वरम् "सोमोऽस्माकं ब्राह्मणानां राजा" तै. सं. १।८।१०।२ तादृशं सोमं शान्तिदायकं सर्वसंसारोत्पादकं वा वरुणं वृणोति सर्वं जगदिति वरुणः तम् ॥ यद्वा "सर्वेषां पापानां निवारकम् । अग्निं ज्ञानस्वरूपं सन्मार्गप्रदर्शकं वा आदित्यं सर्वरसग्राहकं । विष्णुं सर्वत्र व्याप्तम् । सूर्यं सर्वस्य प्रेरकं ब्रह्माणं सर्वतो महान्तम् बृहस्पतिं बृहतां पतिं पालकं यद्वा विज्ञानप्रभुम् अन्वारभामहे प्रतिदिनं स्मराम ॥ ४ ॥

सेनानीनामिति = सेनानीनां = सेनां नयतीति सेनानीः तेषां सेनापतीनां मध्ये स्कन्दः स्कन्दते इति स्कन्दः अत्यन्तगतिमान् अहमस्मि ॥

(मू. गी.) सेनानीनामहं स्कन्दः।
(वेदगी.) अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि।
हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥ २ ॥
अथ. कां. ४ सू. ३१ मं. २ ऋ. मं. १० सू. ८४ मं. २

अग्निरिवेति = हे मन्यो! मन्यते सर्वं गुरूपदिष्टमिति मन्युः जिज्ञासुः तत्संबुद्धौ हे मन्यो! हे मननशील! हे योगिन्! हे मुमुक्षो! अग्निरिव अग्निवत् त्विषितः प्रदीप्तः सन् सहस्व कामक्रोधादिशत्रून् अभिभव तिरस्कुरु। हे सहुरे! हे परमात्मन्! "सहेः औणादिकः उरिन्-प्रत्ययः। हूतः अस्माभिः भक्तैः आहूतः त्वं नोऽस्माकं संसारिजीवानां सेनानीः सेनायाः इन्द्रियवृत्तिसेनायाः नेता अधिपतिः स्कन्दस्वरूपः एधि = भव। शत्रून् अस्माकं कामक्रोधादिरिपून् हत्वाय हत्वा वेदः ज्ञानं मे विभजस्व अस्मभ्यं विभज्य प्रयच्छ। किञ्च ओजः ज्ञानबलं मिमानः कुर्वन् सन् त्वं सेनानीरूपः परमात्मा मृधः विषयरूपान् शत्रून् विनुदस्व विविधेन प्रकारेण जहि घातय। एधि = अस्तेर्लोटि "घ्वसोरेद्धौ" इति एत्वम्। तस्य च "असिद्धवदत्राभात्" इत्यसिद्धत्वात् "झलन्तलक्षणो धिभावः ॥ २

सरसामिति= सरसां जलाशयानां मध्ये सागरः समुद्रः अहमस्मि ।।२४।।

(मू.गी.) सरसामस्मि सागरः ।।२४।।

(वेदगी.) समुद्र ईशे स्रवताम्,, अथ. कां. ६ अनु. ९ सू. ८६ मं. २ यद्वा

समुद्रो नदीभिरुदक्रामत् तां पुरं प्रणयामि वः।

तामाविशत तां प्रविशत सा वः शर्म च वर्म च यच्छतु,, ८

अथ. कां. १९ अनु. २ सू. १९ मं. ८

समुद्र इति= समुद्रः सागरः स्रवतां द्रवीभूतानां जलानाम् ईशे स्वामी अस्ति ।।१९ यद्वा

समुद्र इति= समुद्रः सागरः नदीभिः सह उदक्रामत् उच्चगतिं प्राप्नोति। अहं परमात्मा तां नदीं यद्वा लिङ्गव्यत्ययत्वेन तं समुद्रं वः युष्माकं जीवानामर्थे पुरं पालकमिव प्रणयामि रचयामि। हे जीवात्मानः। तां तं तत्समुद्रोपकण्ठे यद्वा पोतनगर निर्माणेन तं समुद्रम् आविशत आगत्य वसत। तां= तं सागरं प्राविशत तन्मध्ये प्रवेशं कुरुत। सा = सः समुद्रः वो युष्माकं युष्मभ्यं शं सुखं वर्म रक्षकं साधनञ्च यच्छतु प्रदानं कुर्यात् ।। ८ ।।

अग्ने इति = हे परमात्मन्! देवतानां प्रकाशमानपदार्थानां मध्ये प्रथमः सर्वश्रेष्ठः आदिमः असि। यः त्वं देवानां प्रज्ञादिदेवानाम् विदुषां ज्ञानिनां वा उत अपि च मानुषाणां मनोरथत्मभूतानां सर्वसाधारणानां मनुष्याणां चक्षुः यथार्थप्रकाशकः असि। अतः प्रेहि अस्माकं हृदयदेशं प्राप्नुहि। यजमानाः तव पूजां कुर्वाणाः पुण्यात्मानः जीवाः भृगुभिः सह महर्षीणां मध्ये परिपक्वविज्ञानैः भृगुनामकैः महर्षिभिः सह "भृगु ग्रहणमार्षेयानूचानब्राह्मणोपलक्षणार्थमित्युवटः" इयक्षमाणाः यज्ञं चिकीर्षमाणाः सजोषाः समानप्रीतिसेवनाः सन्तः स्वस्ति कल्याणात्मकं स्वः दुःखशून्यं सुखधाम यन्तु प्राप्नुवन्तु
यद्वा हे जीवात्मन् (विप्राणाम्) विशेषज्ञानिनां महर्षीणां मध्ये (ऋषिः) अतीन्द्रियार्थद्रष्टा भृगुः ऋषिः "अहमस्मि"। [illegible]

(मू. गी.) महर्षीणां भृगुरहम्।

(वेदगी.) अग्ने प्रेहि प्रथमो देवतानां चक्षुर्देवानामुत मानुषाणाम्।
इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति
यजुः १२.३१

यद्वा
"ऋषिर्विप्राणाम्" ऋ. मं. ९ सू. ९६ मं. ६

महर्षीणामिति = महर्षीणां महाज्ञानिनां मध्ये भृगुः परिपक्वज्ञानी अहमस्मि ॥ २

गिरामिति = गिराम् अर्थवतीं वाचां मध्ये एकम् अक्षरम् "ओम्" इत्यक्षरमस्मि अहमस्मि ॥

(मू.) गिरामस्म्येकमक्षरम् ॥
(वेदगी.) अग्निरेकाक्षरेण प्राणमुदजयत् । तमुज्जेषम् ॥ यजुः ९।३१

अग्निरिति = अग्निः परमात्मा एकाक्षरेण "ओम्" इत्येकाक्षरेण प्राणम् प्रजाजनं "यद्वै प्राणेन अन्नमात्मनि प्रणयते तत् प्राणस्य प्राणत्वम्" शत. १२।९।१।१४ उदजयत् अत्युत्तमतया अपालयत् । तथा अहं उत अपि तं परमात्मानम् । एकाक्षरेण अजेषम् प्राप्नुयाम् ॥ यजुः ९।३१ यथा माण्डूक्यो. श्रु. १ "ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानभूतं भवद् भविष्यदिति सर्वमोंकार एव । यच्चान्यत् त्रिकालातीतं तदप्योंकार एव" योगदर्शने "तस्य वाचकः प्रणवः" यथा नृसिंहोत्तरतापि. खं. ३ श्रु. १ "प्रणवस्य यापूर्वा मात्रा सा पृथिव्यकारः स ऋग्भिरृग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा प्रथमः पादो भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभि द्वितीयान्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः सा द्वितीयः पादो भवति, भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभि तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रादित्या जगत्याहवनीयः सा तृतीयः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिर्याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः साऽथर्वणैर्मंत्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता चतुर्थः पादो भवति, भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः"

यज्ञानामिति = यज्ञानाम् अग्निष्टोमादियज्ञानां मध्ये जपयज्ञः भगवन्नामोच्चारणात्मकः जपयज्ञः अहमस्मि ॥

(मू.) यज्ञानां जपयज्ञोऽस्मि ॥

(वेदगी.) एष यज्ञानां विततो बहिष्ठो विष्टारिणं पक्त्वा
दिवमाविवेश ॥ अथ. कां. ४ सू. ३४ मं. ५

एष इति = एषः भगवन्नाम्नो जपयज्ञः विततः स्वनाममहिम्ना संसारे विस्तृतः यज्ञानाम् अग्निष्टोमादियज्ञानां मध्ये बहिष्ठः सर्वतो महत्तमः अस्ति। भगवन्नामजापकः मुमुक्षुः जनः विष्टारिणं विस्तीर्णमानाऽवयवं सर्वव्यापकं परमेश्वरम् पक्त्वा हृदि परिपूर्णतया धृत्वा दिवं स्वर्गं सुखधाम वा आविवेश प्रविशति परंब्रह्म प्राप्नोतीत्यर्थः ॥ अथ. ४।३४।५

स्थावराणामिति = स्थावराणाम् अचलानां मध्ये हिमालयः पर्वतः अहमस्मि । २५

(मू. गी.) स्थावराणां हिमालयः ॥२५

(वेदगी.) यदाञ्जनं त्रैककुदं जातं हिमवतस्परि ।
यातूंश्च सर्वान् जम्भयत्सर्वाश्च यातुधान्यः ।
अथ. कां. ४ सू. ९ मं. ९

यदाञ्जनमिति = हिमवतः हिमाच्छन्नपर्वतेभ्यः परि उपरि उत्कृष्टमित्यर्थः । त्रैककुदं हिमालयशिखरभूतः त्रिककुन्नाम पर्वतभागः तत्सम्बन्धि यत् आञ्जनं श्यामं (?)मञ्जनं भगवद्विभूतिस्वरूपं जातम् उत्पन्नम् । तद्विभूतिमयम् आञ्जनं सर्वान् सकलान् यातून् पीडाप्रदान् विषयान् सर्वाश्च यातुधान्यः यातुधानी मोक्षविघ्नकारिणीः दुष्प्रवृत्तीः जम्भयत् विनाशयति । हिमवतस्परि = पञ्चम्याः पराव(?)ध्यर्थे" इति विसर्जनीयस्य सत्वम् । यातुधान्यः = "वा छन्दसि" इति शसि पूर्वसवर्णदीर्घाभावः । अथ. ४।९।९

अश्वत्थ इति = सर्ववृक्षाणां मध्ये अश्वत्थः पिप्पलः अहमस्मि।

(भ. गी.) अश्वत्थः सर्ववृक्षाणाम्॥
(वेदगी.) "अश्वत्थः खदिरादधि" अथ. कां. ३ सू. ६ मं. १
"शमीमश्वत्थ आरूढः" अथ. कां. ६ सू. ११ मं. १
"अश्वत्थो देवसदनः तृतीयस्यामितो दिवि॥
तत्रामृतस्य चक्षणं देवाः कुष्ठमवन्वत॥ अथ. कां. ५ सू. ४ मं. ३

अश्वत्थ इति = अश्वत्थः खदिरात् "खदिरशब्दः वृक्षमात्रज्ञापकः" सर्ववृक्षेभ्यः इत्यर्थः। अधि उत्कृष्टः वर्तते अतः अश्वत्थः परमात्मनः विभूतिरेव। अथ. कां. ३ सू. ६ मं. १। शमीमिति = अश्वत्थः पिप्पलः शमीम् शमीशब्दः वृक्षमात्रज्ञापकः सर्ववृक्षान् आरूढः अश्वत्थः सर्वोपरि विराजते। अथ. ६ सू. ११। मं. १ अश्वत्थ इति = अश्वत्थः = ~~देवः~~ पिप्पलः परमात्मा वा देवसदनः देवानां ब्रह्मादिदेवानां सदनं वासस्थानम् यद्वा "देवानां ज्ञानेन प्रकाशमानानां विदुषां सदनं गृहं स च अश्वत्थः इतः अस्मात् लोकात् तृतीयस्यां दिवि तृतीये प्रकाशे परब्रह्मणि वर्तते। तत्र अश्वत्थे एव अमृतस्य परब्रह्मणः चक्षणं दर्शनं भवति। देवाः ज्ञानिनः मुमुक्षवः कुष्ठम् कौ पार्थिवे देहे यद्वा कौ पृथिव्याम् भूते स्वविभूतिमये अश्वत्थे स्थितं परमात्मानम् अवन्वत अभिलषन्ति॥ अथ. ८।६।६ यथा पद्मपुराणे १६० अध्याये "अश्वत्थरूपो भगवान् विष्णुरेव न संशयः"

देवर्षीणाम्चेति = देवर्षीणाम् च महाज्ञानिनां मध्ये नारदः ब्रह्मशक्त्यन्वेषकः अहमस्मि ॥

(मू॰ गी॰) देवर्षीणाम् च नारदः।

(वेदगी॰) देवा वशामयाचन् यस्मिन्नग्रे अजायत।
तामेतां विद्यान्नारदः सहदेवैरुदाजत ॥ अथ॰ कां॰ १२ सू॰ ४ मं॰ २४

अग्रे सर्वेभ्यः पूर्वे
देवा इति = यस्मिन् ब्रह्मवेत्तरि यतो अग्रे पूर्वं ब्रह्मशक्तिज्ञानम् अजायत प्रादुर्भूत। देवाः योगिनः मुमुक्षवः वशां ब्रह्मशक्तिम् अयाचन् ब्रह्मशक्तिज्ञानार्थं प्रार्थयन्। नारदः = नारम् अज्ञानं द्यति खण्डयति "दो अवखण्डने" इति नारदः। यद्वा नारं परमेश्वरज्ञानप्रबन्धि (सम्बन्धि) ददाति "डुदाञ् दाने" कप्रत्ययः। नारदः परमेश्वरज्ञानप्रदाता विद्यात् जानीयात्। स नारदः ताम् एतां वशां ब्रह्मशक्तिं देवैः सह विद्वद्भिः सह उदाजत् अग्रेकृत्वा अयच्छत्। अथ॰ १२।४।२४

गन्धर्वाणामिति = गन्धर्वाणां गायकानां वेदवाणीधारकाणां मध्ये चित्ररथः नाम गायकः वेदार्थवित् वाऽहमस्मि।

(मू. गी.) गन्धर्वाणां चित्ररथः।

(वेद गी.) तस्यां चित्ररथः सौर्यवर्चसो वत्स आसीत्।

पुष्करपर्णं पात्रम्॥ अथ. कां. ८ सू. १४ मं. ६

तस्या इति = तस्याः गन्धर्वसृष्ट्याः मध्ये सौर्यवर्चसः ब्रह्मज्ञानबलः चित्ररथः चित्रः ज्ञानाय चायनीयः रथः ब्रह्मणः रमणस्थानं यस्य सः प्राप्तब्रह्मज्ञानस्थानः यतिः वत्सः प्रियः आसीत् अस्ति। स च पुष्करपर्णं पुष्करं वपुष्करं वानेन शरीरभूतकं पर्णं पत्रमेव पात्रम् भाजनमस्ति। यथा च यास्कः = पुष्करमन्तरिक्षं पोषयति भूतानि। उदकं पुष्करं पूजाकरं पूजयितव्यम्। इदमपीतरत्पुष्करमेतस्मादेव पुष्करं वपुष्करं वा (निरु. ५।१४) अथ. कां. ८।१४।६

सिद्धानामिति = सिद्धानां धर्मज्ञानाद्यैश्वर्यसिद्धहस्तानां मध्ये कपिलः मुनिः अहमस्मि । २६ ॥

(मू. गी.) सिद्धानां कपिलो मुनिः ।२६॥

(वेदगी.) दशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे पार्याय ॥
गर्भं माता सुधितं वक्षणास्ववेनन्तं तुषयन्ती बिभर्ति । अष्ट. ८ अध्या. ८ व. १९ मं. १६
मंड. १० सू. २७ मं. १६

दशानामिति = माता देवहूतिः दशानाम् परब्रह्मांशेन अवतीर्णानां दशानाम् अवताराणां मध्ये एकं मुख्यं प्रसिद्धं कपिलम् ऋषिम् समानं सर्वत्र समानदृष्ट्या वर्तमानं क्रतवे जगति यज्ञादिप्रवर्तनकर्मणे यद्वा सम्यक्ज्ञानलक्षणप्रज्ञानाय हिन्वन्ति अथ च पार्याय परिसमापयितव्याय प्रेरितव्याय वा यज्ञादिकर्मणः उपदेशनाय हिन्वन्ति संसारे प्रेरयन्ति प्रेषयति वा "वचनव्यत्ययः" । माता प्रकृतिरूपा देवहूतिः वक्षणासु नदीरूपासु स्वनाडीषु सुधितं = सुहितम् सम्यक्तया स्थापितम् अवेनन्तम् = अकान्तिमन्तं प्राकृतिकबालकसदृशमित्यर्थः "वेनतिः कान्तिकर्मा" यद्वा गतिनिवासम् अकामयमानम् तं प्रसिद्धं कपिलं मुनिं तुषयन्ती तुष्यन्ती सम्यक् ज्ञानानि उपदेष्टुम् योग्योऽयमिति मत्वा प्रीता सती गर्भं स्वोदरे प्रजापतेः नियोगात् धारयति ॥ १६ ॥
बिभर्ति

उच्चैःश्रवसमिति= हे अर्जुन! अश्वानां हयानां मध्ये माम् अमृतोद्भवम् "अमृतात् उद्भवः उत्पत्तिः यस्य तथाभूतम् उच्चैः श्रवसम् विद्धि जानीहि ॥

(भ. गी.) उच्चैःश्रवसमश्वानां विद्धि मामृतोद्भवम् ॥

(वेदगी.) ~~उच्चैःश्रवसमश्वानां~~ युक्ताः श्वेता औच्चैःश्रवसं हर्यो युञ्जन्ति दक्षिणम्।
पूर्वतमं स देवानां बिभ्रदिन्द्रं महीयते । अथ. कां. २. सू. १२८ मं. १६

युक्ता इति = श्वेताः शुक्लवर्णाः ~~तीव्रगामिनीः वड्वाः~~ अपि युक्ताः रथे वाहनादौ वा संयुक्ताः (युक्ता = रथे वाहनादौ वा संयोज्य) हर्योः ~~उभयपार्श्वस्थयोः बलवतोः~~ अश्वयोः मध्ये दक्षिणं दक्षिणभागे स्थितं निपुणं गतिशीलं वा उच्चैःश्रवसम् उन्नत कर्णम् अमृतोद्भवम् उच्चैःश्रवोनामानम् अश्वं वा आयुञ्जन्ति रथे योजयन्ति । सः उच्चैःश्रवाः उत्तमः अश्वः देवानां द्योतमानानां सर्वत्र विजिगीषूणां पुरुषाणां पूर्वतमं सर्वश्रेष्ठम् इन्द्रं स्वामिनं सेनापतिम् बिभ्रत् धारयन् महीयते लोकैः लोके पूज्यते । अथ. २०।१२८।१६।

ऐरावतमिति = गजेन्द्राणां गजोत्तमानां मध्ये माम् ऐरावतं गजं मां विद्धि जानीहि ॥

(मू. गी.) ऐरावतं गजेन्द्राणाम् ।

(वेद गी.) तां धृतराष्ट्र ऐरावतोऽधोक् तां विषमेवाऽधोक् ॥ अथ. कां. ८ सू. १० मं. १५ अनु-वाक २९

तामिति = धृतराष्ट्रः धृतं राष्ट्रं येन तथाभूतः धृतराष्ट्रः राष्ट्रस्य आश्रयः ऐरावतो नाम गजः तां सकलां गजसृष्टिम् अधोक् दुदोह अधश्चकार इत्यर्थः। तां विषं मलभूतां अधोक् निष्फलाम् अकरोत्। विषम् = विष-प्रयोगे क्लिष्ट क्रियाम् ॥ अथ. ८।१४।१५

नराणामिति = नराणां मनुष्याणां मध्ये नराधिपं मनुष्यस्वामिनं राजानं मां विद्धि ॥ २८

(मू. गी.) नराणाञ्च नराधिपम् ॥ २८

(वेदगी.) राजा राष्ट्राणां पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु ।

ऋ. मं. ५ सू. ३४ मं. ११ ऋ. अष्ट. ४ अध्य. ३ व. २६ मं. ११ यद्वा ।

" सम्राडस्यसुराणां ककुन्मनुष्याणाम् " अथ. कां. ६ सू. ८६ मं. ३

इन्द्रो राजा जगतश्चर्षणीनाम् " ऋ. मं. ७ सू. २८ मं. ३

त्वं हि शश्वतीनां पती राजा विशामसि " ऋ. मं. ८ सू. ९५ मं. ३

" त्वमग्ने राजा " ऋ. मं. २ सू. १ मं. ४

त्वं विश्वेषां वरुणासि राजा " ऋ. मं. २ सू. २८ मं. १. यद्वा पतिर्बभूथासमो जनानामेको विश्वस्य भुवनस्य राजा, ऋ. मं. ६ सू. ३६ मं. ४

राजेति = राष्ट्राणां जनपदानां पेशः रूपं राजा नराधिपः अस्ति । नदीनां स्वराज्ये वर्तमानानां नदीनामर्थे पेशः हिरण्यम् । तन्मध्यात् कृत्रिमप्रवाहसञ्चालनाद्धेतोः तासां नदीनां रूपं स्वर्णमयं करोतीत्यर्थः । पेशः रूपं पेशः हिरण्यम् यथा निघण्टौ पिष्टं पेशः कृशनम् = इति कनकं हिरण्य नामसु पाठः (निघं. १।२) पेश इति रूपनाम पिंशते विपशितं भवति (निरु. ८।११) अस्मै षष्ठ्यर्थे चतुर्थी अस्य राज्ञः क्षत्रं क्षात्रं बलम् अनुत्तमम् अन्यैरबाधितं विश्वायुः सर्वतोगन्तृ भवतीति । राष्ट्राणाम् = णत्वाऽभावः छान्दसः । ऋ. ५।३।२६।११ हे परमात्मन् ! मनुष्याणां जीवमात्राणां असुराणां प्राणप्रदानां मध्ये ककुत् श्रेष्ठः सम्राट् चक्रवर्ती नराधिपः अस्मि ।

आयुधानामिति = अहं श्रीकृष्णः परमात्मा आयुधानां शस्त्रास्त्राणां मध्ये वज्रम् अस्मि ॥

(भ.गी.) आयुधानामहं वज्रम् ॥
(वेदगी.) वज्रमेको बिभर्ति हस्त आहितम् ।
तेन वृत्राणि जिघ्नते । ऋ. अष्ट. ६ अध्या. २ व. २६ मं. ४
(मं ३. ८ सू. २९ मं. ४

वज्रमिति = एकः राजा आहितं हस्ते स्वकीयहस्ते निहितम् वज्रम् एतन्नामकं भगवतः विभूतिभूतम् आयुधं बिभर्ति धारयति । स एव राजा तेन वज्रेण वृत्राणि न्यायविरोधीनि पापानि यद्वा शत्रून् जिघ्नते भृशं हन्ति ।४

धेनूनामिति = धेनूनां गवांमध्ये कामधुक् कामधेनुः अहमस्मि।

(मू॰ गी॰) धेनूनामस्मि कामधुक् ॥

(वेदगी॰) एतास्त्वं असौ धेनवः कामदुघा भवन्तु। एनी श्येनीः सरूपा विरूपास्तिलवत्सा उपतिष्ठन्तु त्वात्रं ॥ अथ॰ कां॰ १८ सू॰ ४ मं॰ ३३

असौ प्राणे

एता इति = एता अग्रे निर्दिश्यमानाः धेनवः गावः ते तव जीवस्य निमित्ते कामदुघाः "कामान् दुग्धे इति कामदुघा ताः कामदुघाः कामानां दोग्ध्र्यः अभिलषितफलस्य दोग्ध्र्यः भवन्तु। या धेनवः एनीः कपिलाः सन्ति। याः श्येनीः श्वेतवर्णविशिष्टाः सन्ति। याः सरूपाः समानरूपाः। याः विरूपाः विविधरूपाः चित्रका इत्यर्थः। याः तिलवत्साः तिलसदृशश्यामवर्णोपहितवत्सोपेताः सन्ति। ताः सर्वाः त्वा त्वाम् अत्र अस्मिन् असौ जन्मनि प्राणे सति जीवनकाल एव इतिभावः "असवः प्राणा उच्यन्ते" उपतिष्ठन्तु प्राप्नुवन्तु। कामदुघाः = "दुहः कब्घश्च" इति कब्घत्वे ॥ ३३

प्रजन इति = प्रजनः यथाशास्त्रं सन्तानोत्पादकः कामदेवः अहमस्मि।

(मू. गी.) प्रजनश्चास्मि कन्दर्पः ॥

(वेदगी.) यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद् वृणीषे।
ताभिष्ट्वमस्माँ अभिसंविशस्वान्यत्र पापीरप वेशया धियः ॥
अथ. कां. ९ सू. २ मं. २५

या इति = हे काम! हे सन्तानोत्पादक! कन्दर्प! ते तव याः भद्राः कल्याण्यः शिवाः सन्तानसुखप्रदाश्च तन्वः शरीराणि सन्ति। गृहस्थः यद् = पुत्रफलं वृणीषे = वृणोति "पुरुषव्यत्ययः"। तेन पुत्रप्राप्तिरूपं फलं सत्यं भवति। त्वं कामः ताभिः पुत्रप्रदात्रीभिः शिवाभिः तनुभिः अस्मान् यथाशास्त्रं पुत्राभिलाषिणः जीवान् अभिसंविशस्व प्राप्नुहि। प्रविष्टो भव
अस्माकं पापीः धियः पापस्वरूपाः बुद्धीः अन्यत्र दूरप्रदेशे अपवेशय प्रापय ॥ २५ ॥

सर्पाणामिति = सर्पाणां मध्ये वासुकिः सर्पराजः अहमस्मि ॥२८॥

(मू०) सर्पाणामस्मि वासुकिः ॥२८॥

(वेदगी०) नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । यजुः १३।६

नम इति = ये के च सर्पाः सर्पन्ति उरसा गच्छन्ति ते सर्पाः उरगाः पृथिवीम् अनु व्यवस्थिताः सन्ति । ये च अन्तरिक्षे आकाशे ये च दिवि प्रकाशमये प्रदेशे वासुकिरूपतया व्यवस्थिताः सन्ति तेभ्यः वासुकिसहितेभ्यः सर्पेभ्यः नमः नमस्कारोऽस्तु ॥ ६ ॥

अनन्त इति = नागानां मध्ये अनन्तः शेषनागः अहमस्मि। यादसां जलचरजीवानां मध्ये वरुणः अहमस्मि॥

(मू॰ गी॰) अनन्तश्चास्मि नागानां वरुणो यादसामहम्॥

(वेदगी॰) . . . . . .

वरुणोऽपामधिपतिः स मामवतु॥ अथ॰ कां॰ ५ सू॰ २४ मं॰ ४

वरुण इति = अपां जलानाम् (जलचराणां च) अधिपतिः वरुणः (वृणोतिः वृणोति सर्वं जगत् इति वरुणः) अस्ति। स वरुणः माम् जीवात्मानम् (प्रजानाम्) अवतु रक्षतु॥ ४

पितृणामिति = पितृणां मध्ये अर्यमा अहमस्मि। संयमवतां इन्द्रियनिग्रहं कुर्वतां मध्ये यमः अहमस्मि॥ २९॥

(मू॰ गी॰) पितृणामर्यमा चास्मि यमः संयमतामहम्॥२९॥

(वेद गी॰) सोऽर्यमा स वरुणः स रुद्रः स महादेवः,, अथ॰ कां॰ १३ सू॰ ४ मं॰ ४
"यमः परोऽवरो विवस्वान् ततः परं नाति पश्यामि किञ्चन
यमे अध्वरो अधि मे निविष्टो भुवो विवस्वानन्वाततान,, ३२
अथ॰ कां॰ १८ सू॰ २ मं॰ ३२
त्वमर्यमा सत्पतिर्यस्य संभुजं त्वमंशो विदथे देव भाजयुः,, ऋ॰ मं॰ २ सू॰ १ मं॰ ४
"स उ महायमः,, अथ॰ कां॰ १३ सू॰ ४ मं॰ ५

स इति = सः परमात्मा अर्यमा पितृणां नियन्ताऽस्ति, स वरुणः ~ सः परमात्मा एव रुद्रः स एव महादेवः।४॥
यम इति = यमः संयमतामपि नियन्ता यमः परः सर्वेभ्यः नियन्तृभ्यः उत्कृष्टः अस्ति। विवस्वान् विविधलोकानां वासकः सं नियन्ता
सूर्यः अवरः अल्पशक्तिकः अस्ति। ततः परं यमात्परं किञ्चन किमपि नाति पश्यामि नाऽवलोकयामि। मे मम ~~यजमानस्य~~
अध्वरः जीवनयज्ञो जीवनयज्ञः यमे सर्वनियन्तारि परमेश्वरे अधिनिविष्टः प्रविष्टः ~~आश्रितो~~ऽस्ति। विवस्वान् सूर्यः भुवः लोकान्
अन्वाततान स्वनियन्तुः ईश्वरस्य आज्ञया स्वस्वस्थाने स्थापयति,, ३२॥

प्रह्लाद इति = दैत्यानां मध्ये अहं प्रह्लादः अस्मि ॥

(मू.गी.) प्रह्लादश्चास्मि दैत्यानाम् ॥

(वेदगी.) तस्यां विरोचनः प्राह्लादिर्वत्स आसीदयस्पात्रं पात्रम् ॥

अथ. कां. ८ सू. १० मं. २

तस्या इति = तस्याः दैत्यसङ्घस्य मध्ये विरोचनः "यद्यपि विरोचनः प्रह्लादपुत्रः आसीत् तद्ग्रहणेन तत्पिता प्रह्लादः गृह्यते । विरोचनः विशेषेण रोचमानः प्रकाशमानः प्रह्लादः प्राह्लादिः प्रकर्षेण भगवद्भक्त्यानन्दवान् भक्तः प्रह्लादः वत्सः प्रियः भक्त आसीत् अस्ति । अयस्पात्रम् = अयसः तेजसः प्रकाशस्वरूपस्य परब्रह्मणः पात्रम् अधिकारी भूत्वा पात्रम् स्ववंशाभ्युदयः अस्ति ॥ २ ॥

काल इति = कलयतां शुभम् अशुभम् क्षणनिमेषादिं कलयतां मध्ये कालः अहमस्मि ॥

(मू. गी.) कालः कलयतामहम् ॥

(वेदगी.) सप्त चक्रान् वहति काल एष सप्तास्य नाभीरमृतं न्वक्षः।
स इमा विश्वा भुवनान्यञ्जत् कालः स ईयते प्रथमो नु देवः ;
अथ. कां. १९ सू. ५३ मं. २

सप्तेति = एषः कालः सप्त संख्याकान् चक्रान् चक्रवद्गतिशीलान् ऋतून् वहति धारयति प्रेरयति वा। अस्य कालस्य सप्त नाभीः सप्त लोकाः नाभिस्थानभूताः सन्ति। कालः अक्षः व्याप्तः अमृतम् मरणधर्मरहितोऽस्ति। सः सर्वसंहारकारी कालः इमा इमानि विश्वा विश्वानि = सर्वाणि भुवनानि लोकान् अञ्जत् व्याप्तः वर्तते। स एव कालः ईयते मन्त्रैः मत्या ~~प्राप्यते~~ ज्ञायते।
प्रथमः मुख्यः देवः

~~स परमात्मा विप्राणां~~ मृगाणामिति = मृगाणां वन्यपशूनां मध्ये मृगेन्द्रः सिंहः अहमस्मि।
पक्षिणां विहगानां मध्ये वैनतेयः सुपर्णः गरुत्मान् वा अहमस्मि ॥३०

(मू. गी.) मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥
(वेदगी.) "ऋषिर्विप्राणां महिषो मृगाणाम् .. ऋ. मंड. ९ सू. ९६ मं. ६
"स सुपर्णः गरुत्मान् .. अथ. कां. ९ सू. १० मं. २८ ऋ. अष्ट. २ अध्या. ३ व.
मंड. १ सू. १६४ मं. ४६ २२ मं. ३६

"ऋषिरिति = स परमात्मा विप्राणां मेधाविनां मध्ये ऋषिर्भवति। यः पतेद्वं पश्यति सः ऋषिः ऋषिर्दर्शनात् (निरु
२।११) मृगाणां वन्यपशूनां मध्ये महिषः महान् सिंहः अस्ति। महिषशब्दस्य महत्सु पाठः (निघं. ३।७)।
सः परमात्मा सुपर्णः सुपतनशीलः गरुत्मान् गरुडः अस्ति ॥२८॥

पवन इति = पवतां पावनकर्तॄणां मध्ये पवनः वायुः अहमस्मि ॥

(मू. गी.) पवनः पवतामस्मि ।
(वेद. गी.) वायुरेनाः समाकरत् „ अथ. कां. ६ सू. १४१ मं. १ यद्वा
वायुरन्तरिक्षस्याधिपतिः स मामवतु „ अथ. कां. ५ सू. २४ मं. ८ यद्वा
"वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् । अस्मे वृद्धा असन्निह ।
ऋ. अष्ट. १ अध्या. २ व. १६ मं. १ ऋ मं. १ सू. ३८ मं. १५

वायुरिति = वायुः पवतां मध्ये पवनः वायुः एनाः एनांसि पापानि समाकरत् दूरे प्रक्षिप्तवान् ॥ १ यद्वा अन्तरिक्षस्येति = अन्तरिक्षस्य आकाशस्य अधिपतिः स्वामी सर्वाकाशवर्ती वायुः अस्ति । स च परमात्मविभूतिः वायुः माम् प्राणिनम् अवतु रक्षतु ॥ २ यद्वा वन्दस्वेति = हे जीवात्मन् ! त्वं त्वेषं स्वपावकत्वेन प्रकाशमानं पनस्युं पनः स्तोत्रम् आत्मन इच्छति इति पनस्युः तं पनस्युं स्तुतियोग्यम् अर्किणम् = अर्कोऽस्यास्तीति अर्की "अत इनिठनौ„ तम् अर्किणम् अर्चनोपेतम् मारुतं मरुत्सम्बन्धिनं गणं वायुगणं वन्दस्व नमस्कुरु । अस्मे अस्माकम् इह ~~कर्म~~ नमस्कारकर्मणि वृद्धाः असन् वायवः प्रवृद्धा भवन्तु । मरुत् = मितं निर्मितम् अन्तरिक्षं प्राप्य रौति शब्दं करोति इति मरुत् यद्वा अमितं भृशं शब्दं कारीति मरुत् । यद्वा मितं स्वैर्निर्मितं मेघं प्राप्य विद्युदात्मना सेचमानः । अथवा "महति अन्तरिक्षे द्रवतीति मरुत् । वन्दस्व = वदि अभिवादनस्तुत्योः । पनस्युः पनः स्तुत्यर्थो धातुः असुन् "सुप आत्मनः क्यच्„ "क्याच्छन्दसीत्युः प्रत्ययः । अर्किणम् = ऋच् स्तुतौ । असन् = "बहुलं छन्दसि„ इति शपो लुगभावः "इतश्च लोपः„ इतीकारलोपः ॥ १ ॥

राम इति= शस्त्रभृतां शस्त्रधारिणां मध्ये रामः श्रीरामचन्द्रः यद्वा परशुरामः अहमस्मि ॥

(भ. गी.) रामः शस्त्रभृतामहम् ॥

(वेद गी.) वाशीमेको बिभर्ति हस्त आयसीमन्तर्देवेषु निध्रुविः ॥ ऋ. अ. ६ अध्या. ५ व. ३६ मं. ३
मं. ३. ९ सू. २९ मं. ३

यद्वा
तीक्ष्णेषवो ब्राह्मणा हेतिमन्तो यामस्यन्ति शरव्यां न सा मृषा ।
अनुहाय तपसा मन्युना चोत दूरादव भिन्दन्त्येनम् ॥ अथ. कां. ५ सू. १८ मं. ९

शस्त्रभृतां
वाशीमिति= देवेषु अन्तः= देवानां स्वतेजसा प्रकाशमानानां मध्ये प्रकाशमानः निध्रुविः निश्चले स्थाने वर्तमानः यद्वा नितरां गमनम् अस्यास्तीति निध्रुविः सर्वदा गच्छन् अथवा संग्रामेषु शत्रूणां पुरतोऽतिशयेन स्थैर्यवान् एकः परशुरामः यद्वा रामचन्द्रः आयसीं अयोमयधारां वाशीं= ~~[illegible] कुठारं~~ "वाशृ शब्दे शब्दयति आक्रन्दयति शत्रून् अनया इति वाशी तक्षणसाधनं कुठारः ते वाशीं कुठारं हस्ते स्वकीयहस्ते बिभर्ति धारयति ॥ २ यद्वा
तीक्ष्णेषव इति= तीक्ष्णाः इषवः येषां तथाभूताः, तीक्ष्णबाणयुक्ताः, हेतिमन्तः हेतिः अस्यास्तीति हेतिमान् ते हेतिमंतः अस्त्रयुक्ताः ब्राह्मणाः परशुरामादयः यां शरव्यां ~~[illegible]~~ शरप्रवाहं अस्यन्ति ~~[illegible]~~ क्षिपन्ति । सा शरव्या शरवा मिथ्या न भवति । तपसा उत अपि च मन्युना क्रोधेन अनुहाय अनुगत्य एनं पापयुक्तं क्षत्रियं दूरात् एव भिन्दन्ति नाशयन्ति ९

झषाणामिति=झषाणां मत्स्यानां जलचरजीवानां वा मध्ये मकरः ग्राहः च अहमस्मि॥

(मू० गी०) झषाणां मकरश्चास्मि॥
(वेदगी०) शिंशुमारा अजगराः पुरीकया जुषा मत्स्या रजसा येभ्यो अस्यसि।
न ते दूरं न परिष्ठास्ति ते भव सद्यः सर्वान् परिपश्यसि भूमिं पूर्वस्मा
द्धंस्युत्तरस्मिन् समुद्रे॥ अथ० कां० ११ अनु० सू० २ मं० २५

शिंशुमारा इति=शिंशुमाराः मकराः अजगराः सर्पविशेषाः पुरीकया (पुरीचयाः—पुरीजयाः) जलचरप्राणिविशेषाः। जषाः (झषाः) महामत्स्याः। मत्स्याः साधारणमीनाः भगवद्विभूतयः सन्ति। रजसा आत्मीयेन तेजसा येभ्यः प्राणिभ्यः जोऽहम् अस्यसि प्रक्षिपसि। हे भव! हे परमात्मन्! ते ~~सर्वव्यापकस्य तव~~ दूरं विप्रकृष्टं नैवास्ति। ते परिष्ठा परिहृत्य स्थिताः न विद्यते किन्तु त्वं सर्वान् प्राणिनः अप्राणिनश्च सद्यः सर्वदा तत्क्षणमेव परिपश्यसि परितः अवलोकयसि। तथा पूर्वस्मात् पुरोवर्तिनः समुद्रात् उत्तरस्मिन् उत्तरदिग्वर्तिनि समुद्रे जलधौ भूमिं सर्वां भूमिं हंसि क्षणादेव गच्छसि" हन्तिरत्र गत्यर्थकः। अतः सर्वगतस्य तव विप्रकृष्टं नैवाऽस्ति तथा च शिंशुमारादयः त्वद्विभूतयः सन्तः तव नित्यसंनिहिता वर्तन्ते इत्यर्थः॥२५

स्रोतसामिति= स्रोतसां स्रोतोवतीनां नदीनां मध्ये जाह्नवी गंगानदी अहमस्मि ॥ ३१ ॥

(मू. गी.) स्रोतसामस्मि जाह्नवी ॥ ३१ ॥
(वेद. गी.) ता अपः शिवा अपोऽयक्ष्मंकरणीरपः। यथैव तृप्यते मयस्तास्त
आदत्त भेषजीः,, अथ. कां. १९ सू. ५ मं. ५

ता इति= हे जीवाः! ताः गंगाः अपः जलानि शिवाः कल्याणकराः अपः जलानि कथ्यन्ते। याः अपः सलिलानि अयक्ष्म करणीः राजयक्ष्मादि रोगाणाम् अनुत्पादकाः सन्ति। ते तादृशजलसेवकाः गंगाजलपातारः यूयं मुमुक्षवः जनाः ताः तादृशीः भेषजीः ओषधरूपाणि गंगाजलानि आदत्त गृह्णीत। यथैव येन प्रकारेण यद्वा यैः गंगाजलैः मयः सुखं तृप्यते परिपूर्यते। औषधं जाह्नवी तोयं वैद्यो नारायणो हरिः,, ५१।

सर्गाणामिति = हे अर्जुन! अहं सर्गाणां सृज्यन्ते इति सर्गाः महदादिस्थूलान्ताः विकाराः, तेषामादिः मूलकारणम् तथा अन्तः विनाशः कार्यपदार्थस्य लयः। तथा मध्यं कार्यरूपस्थितिश्च अहं परमात्मा एवाऽस्मि॥

(मू.गी.) सर्गाणामादिरन्तश्च मध्यं चैवाऽहमर्जुन।
(वेदगी.) मध्यमेतदनडुहो यत्रैष वह आहितः।
एतावदस्य प्राचीनं यावान् प्रत्यङ् समाहितः॥
अथ.कां.४ सू.११ मं.८

मध्यमिति = अनडुहः अनः ब्रह्माण्डरूपं वहतीति अनड्वान् ब्रह्माण्डधारकः, तस्य अनडुहः जगद्धारकस्य परमात्मनः एतत् जगद्रक्षणं मध्यम् मध्यभाग एव अस्ति। यत्र ~~यस्मिन्~~ यस्मिन्मध्यभागे कार्यरूपस्थित्याविर्भावः एषः वहः विश्वभारः आहितः स्थापितः अस्ति। एतावत् मध्यभागवत् अस्य परमात्मनः प्राचीनम् प्राग्भावः सर्गाणामादिभागः अस्ति। यावान् प्रत्यग्भागः सर्गाणामन्तिमभागः समाहितः सम्यक् स्थापितः अस्ति। अतः परमात्मा एव सर्गाणाम् आदिः अन्तः मध्यमेवाऽस्ति॥८॥

अध्यात्मेति = विद्यानाम् विद्याः ज्ञानहेतवः सर्वे वेदाः शास्त्राणि च तासां विद्यानां मध्ये अध्यात्मविद्या उपनिषद्विद्या अहमेवाऽस्मि ॥

(मू. गी.) अध्यात्मविद्या विद्यानाम् ॥
(वेद. गी.) तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते।
तस्मिन् यद् यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः ॥
अथ. कां. १०. सू. २ मं. ३२

तस्मिन्निति = तस्मिन् हिरण्यये सुवर्णमये सात्विके त्र्यरे त्रयः सत्वरजस्तमोगुणाः अरा यत्र तथाभूते त्रिप्रतिष्ठिते त्रिषु वात पित्तकफेषु प्रतिष्ठा स्थितिः यस्य तथाभूते त्रिप्रतिष्ठिते कोशे देहे यत् यक्षं पूजनीयं तत्वम् आत्मन्वत् आत्मज्ञान स्वरूपमस्ति तदध्यात्मज्ञानं "वै" निश्चये, ब्रह्मविदः ब्रह्मज्ञानिनः यतयः विदुः जानन्ति ॥३२॥

वाद इति = प्रवदतां प्रकर्षेण विवादं कुर्वतां मध्ये वादः अर्थनिर्णयहेतुः वादः अहमेवास्मि ॥ ३२

(मू·गी·) वादः प्रवदतामहम् ॥ ३२ ॥

(वेदगी·) ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट संराधयन्तः सधुराश्चरन्तः।
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान् वः संमनसस्कृणोमि ॥
अथ· कां· ३ सू· ३० मं· ५

ज्यायस्वन्त इति = ज्यायस्वन्तः अहं ज्येष्ठः त्वं कनिष्ठः इति विवादोत्पन्नेन ज्येष्ठकनिष्ठभावेन परस्परम् अनुसरन्तः चित्तिनः वादजल्पवितण्डाभिः समानचित्तयुक्ताः समानसंसिद्धिकाः सन्तः, सधुराः समानकार्योद्धारः चरन्तः इत्थं विवादं कुर्वन्तः सन्तः यूयं मा वियौष्ट मा पृथक् भवत वियुक्ता मा भवतेत्यर्थः। अन्यः अन्यस्मै परस्परं वल्गु शोभनं वादं प्रियवाक्यं वदन्तः भाषमाणा यूयम् एत आगच्छत। हे वादेन विवदमानाः जनाः! अहं वः युष्मान् सध्रीचीनान् वादकार्येषु सहप्रवृत्तान् संमनसः समानमनस्कान् कृणोमि करोमि। सधुराः = "ऋक्पूरब्धूःपथामानक्षे" इत्यकारः समासान्तः। वियौष्ट = वि+यु मिश्रणामिश्रणयोरित्यस्मात् माङि लुङ् मध्यमबहुवचने रूपम्। इडभावश्छान्दसः। सध्रीचीनान् = सह अञ्चतीति विग्रहे अञ्चतेः = "ऋत्विग्दधृक्—" इत्यादिना क्विन् 'सहस्य सध्रिः' इति सध्र्यादेशः "विभाषाञ्चेरदिक्स्त्रियाम्" इति स्वार्थिकः खः। ततो भसंज्ञायाम् "अचः" इत्यकारलोपे "चौ" इति दीर्घः ॥ ५ ॥

अक्षराणामिति = अक्षराणां वर्णानां मध्ये ऽहम् अकारः अस्मि।

(मू. गी.) अक्षराणामकारोऽस्मि।

(वेद गी.) येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहा कः॥ अथ. कां. २. सू. २४ मं. ४

येनेति = येन परमात्मना [redacted] इमा इमानि विश्वा विश्वानि च्यवना च्यवनानि गतिशीलानि स्थावरजंगमानि कृतानि निर्मितानि विश्वसृजानि कः। सः कः अस्ति। यः परमात्मा दासम् उपक्षयशीलं विनश्वरस्वभावं पुनः पुनरुच्चारणीयं अधरं म अं अकारः परः धारकः यस्य तथाभूतं वर्णम् अक्षरसमूहं गुहायां हृदयाकाशे उत्पादयति ॥ ५॥ यथा चोपनिषत्सु अकारो वै सर्ववाक्॥ तथा कामधेनुतंत्रेऽपि "अण तत्त्वमकारस्य अतिगोप्यं वरानने। शरच्चंद्र प्रतीकाशं पञ्चकोशमयं सदा। पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम्। निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्तिमान्। बिन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणीम्॥ २॥

द्वन्द्व इति = सामासिकस्य समाससमूहमध्ये द्वन्द्वः द्विपदप्रधानत्वात् द्वन्द्वः समासोऽहमस्मि ॥

(मू॰ गी॰) द्वन्द्वः सामासिकस्य च ॥
(वेद गी॰) को विराजो मिथुनत्वं प्रवेद,, अथ॰ कां॰ ८ सू॰ ९ मं॰ १॰

क इति = विराजः विराड्पुरुषस्य परमात्मनः मिथुनं द्वन्द्वत्वं कः प्रवेद प्रकर्षेण जानाति ॥ १॰

अहमिति=अहं परमात्मा अक्षयः अविनश्वरः कालः अहमस्मि ॥

(मू. गी.) अहमेवाक्षयः कालः।

(वेद गी.) कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः,,
अथ. कां. १९ सू. ५३ मं. ८
कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम्,, अथ. १९।५३।९

काल इति=यः परमात्मा प्रजापतेः प्रजापालकस्य सूर्यादिदेवस्य पिता जनकः उत्पादकः उपादानकारणम् अस्ति (आसीत्)। सः कालः कालाख्यः परमात्मा ह=एव सर्वस्य समग्रब्रह्माण्डस्य ईश्वरः स्वामी अस्ति ॥ ८ ॥ यथा च नृसिंहतापि. खं. ४ श्रु. २२ " यो ह वै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमोनमः,,

धातेति= विश्वतोमुखः सर्वतोमुखः धाता सर्वेषां धारकः पालको वाऽहमस्मि ॥३३॥

(मू॰गी॰) धाताऽहं विश्वतो मुखः ॥३३॥
स धाता विधर्ता अथ॰कां॰ अथ॰१३।४।३
(वेदगी॰) ~~धाता दाधार पृथिवीं धाता द्यामुत सूर्यम्~~ ,, अथ॰कां॰६सू॰६॰मं॰३
(यद्वा)
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ,, ऋ॰ अष्ट॰ ८ अध्या॰८ ,,१०मं॰१९०सू॰ मं॰३
धाता विधाता भुवनस्य यस्पतिः ,, अथ॰कां॰५सू॰३मं॰४ ऋ॰ १०।१२८।६

~~धातेति= धाता सृष्टिकर्ता तथा सृष्टिपालकः परमात्मा~~
स इति= स परमात्मा धार्ता सर्वेषां धारकः पालकश्च । स परमात्मा विधर्ता विशेषेण प्रकारेण धारयिताऽस्ति ॥२
यद्वा
सूर्याचन्द्रमसाविति= धाता सृष्टिकर्ता परमात्मा सूर्याचन्द्रमसौ यथापूर्वं पूर्वकल्पवत् अकल्पयत् विरचयति ।

मृत्युरिति= सर्वहरः सर्वेषां स्थावरजंगमानां पदार्थानां हर्ता विनाशकः मृत्युः अहमस्मि । भविष्यतां भाविनां कार्याणां मध्ये उद्भवः जन्मकारणम् अहमस्मि ॥

(मू.गी.) मृत्युः सर्वहरश्चाऽहमुद्भवश्च भविष्यताम् ॥
(वेद.गी.) स एव मृत्युः — " अथ.कां.१३ सू.४ मं.२५
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
पाठभेद: । यजुषि आरोहाथा — आसीदस्य — ऋ.मंड.३ सू.२९ मं.१०
तं जानन्नग्न आरोहाधा नो वर्धया रयिम् " ऋ.अष्ट.३ अध्या.१ व.३३ मं.१० यजुः ३।१४
~~" स एव मृत्युः " अथ.कां.१३ सू.४ [illegible] मं.२५~~

स इति= स परमात्मा मृत्युः सर्वहरः मृत्युः अस्ति ।२६ "अन्तकोऽसि मृत्युरसि" अथ.कां.१६ सू.५ मं.१ हे स्वप्न! त्वं अन्तकः असि त्वं मृत्युरसि "
अयमिति= हे अग्ने! हे अग्निवत् ~~[illegible]~~ जीवात्मन्! ते तव जीवात्मनः योनिः जन्मकारणम् ~~[illegible]~~ ऋत्वियः ऋतवः कालः सर्वथा प्रकाः अयं परमात्मा अस्ति । यतः यस्मात् परमात्मनः जातः मनुष्यजन्मनि एव जातः उत्पन्नः सन् त्वम् अरोचथाः ~~[illegible]~~ जगति प्रकाशसे । तं परमात्मानं जानन् जानन् आरोह स्वाऽभ्युदयं प्राप्नुहि । हे परमात्मन्! अध= अनन्तरं नोऽस्माकम् जीवानां रयिं स्वसम्बन्धि ज्ञानं वर्धय सर्वोत्कृष्टतां सम्पादय । योनिः = यु मिश्रणे "वहिश्री —" इत्यादिना निप्रत्ययः । ऋत्वियः = "छन्दसि घस्" ५।१।१०६ इति ऋतुशब्दात् प्राप्तेऽर्थे घस्प्रत्ययः । "सितीति" पदसंज्ञा "ओर्गुणः" इतिभसंज्ञाऽधीनो गुणः न भवति । अरोचथाः = रुच दीप्तौ अस्य लङि रूपम् । वर्ध वर्द्धने "हेतुमति णिच्" ॥२०॥

कीर्तिरिति = नारीणाम् स्त्रीणां मध्ये कीर्तिः यशः श्री शोभा वाक् वाणी स्मृतिः स्मरणशक्तिः मेधा सत्यासत्यविवेकात्मिका बुद्धिः धृतिः धैर्यम् क्षमा क्षमता अहमस्मि ॥ ३४ ॥

(मू० गी०) कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

(वेदगी०) अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेभ्यः।
वीरसूर्देवृकामा सं त्वयैधिषीमहि सुमनस्यमाना ॥ अथ० कां० १४ सू० सं० २० ।
ऋ० मं० १० सू० ८५ मं० ४४

सुमंगली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शंभूः। स्योना श्वश्र्वै प्रगृहान् विशेमान्, अथ० १४।१।२६

अघोरचक्षुरिति = हे स्त्रि! त्वम् अघोरचक्षुः क्रोधात् हेतोः अभयंकरचक्षुः सती एधि वर्द्धस्व। अर्थात् श्रीक्षमागुणयुक्ता भव। तथा अपतिघ्नी पतिविनाशकारिणी मा भव अर्थात् पतिसेवया कीर्तिमती भव। गृहेभ्यः गृहवासिभ्यः स्योना पतिश्वशुरादिसुखदायिनी भव अर्थात् पत्याद्यनुत्तरवादिनी भव। ते वाक् सुखदायिनी स्यात्। शग्मा सुखदायिनी अर्थात् सुमेधावती भव।
सुशेवा = सुष्ठुसेवापरायणा भव। सुयमा सम्यक्तया धृत्या क्षमया च नियमान् पालयन्ती एधि वर्द्धस्व। वीरसूः वीराणां पुत्राणां प्रसवित्री भव। देवृकामा देवराणां शुभं कामयमाना भव। सुमनस्यमाना स्मृतिगुणेन सुचित्तवती भव। त्वया कीर्तिश्रीवाक्स्मृतिमेधाधृतिक्षमागुणैः युक्तया त्वया स्त्रिया वयं गृहस्थाः समेधिषीमहि सम्यक्तया सुखं प्राप्नुयाम

बृहदिति= साम्नां सामवेदमंत्राणां मध्ये यानि रथन्तरादीनि सामानि सन्ति तन्मध्ये बृहत् साम अहमस्मि ।

(मू·गी·) बृहत्साम तथा साम्नाम् ।

(वेदगी·) इन्द्राय साम गायत विप्राय बृहते बृहत् ।
धर्मकृते विपश्चिते पनस्यवे ॥ अथ· कां· २· सू· ६२ मं· ५ सामवे·
रू· अष्ट· ६ अध्या· ८ व· १ मं· १ ऋ· मंड· ८ सू· ९८ मं· १ निरु· ७।१२

इन्द्रायेति= हे मुमुक्षवः जनाः! विप्राय विशिष्टज्ञानवते बृहते महते धर्मकृते जगद्धारकं पालकं कर्म करोतीति धर्मकृत् तस्मै धर्मकृते जगद्धारकपोषककर्मकर्त्रे विपश्चिते सर्वज्ञाय पनस्यवे स्तुतियोग्याय इन्द्राय परमैश्वर्यसम्पन्नाय परमात्मने परमात्मप्राप्तये बृहत् साम बृहन्नामकं साम गायत पठत ।५

गायत्रीति छन्दसां मध्ये गायत्रीछंदः अहमस्मि।

(मू. गी.) गायत्री छन्दसामहम्।
(वेद् गी.) यस्मात् पक्वादमृतं सम्बभूव यो गायत्र्या अधिपतिर्बभूव।
"प्राणायनो गायत्री," यजु: १३।५४ यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनाति तराणि मृत्युम्।
अथ. कां. ४ सू. ३५ मं. ६ नूतनः मंत्रः ऋ. परिशिष्ट भागे ऋ. अष्ट. ८ अध्या. ८ व. २४ ऋ. मं. १०. सू. १६६ सूक्तानन्तरम्
यो वेदादिषु गायत्री सर्वव्यापी महेश्वरः। तदुक्तं च यदा योग्यं तन्मे मनः शिवसंकल्पमस्तु," मं. ७८
तथा च "गायत्री वा इदं सर्वम्," छान्दो. ३।१२।१ "ब्रह्म हि गायत्री," ताण्ड्य ब्रा. ११।११।८

यस्मादिति = यस्मात् पक्वात् परिपूर्णात् ब्रह्मणः अमृतं मुक्तिः सम्बभव संभवति। यः परमात्मा गायत्र्याः स्वविभूतित्वेन उत्पन्नस्य गायत्रीमंत्रस्य अधिपतिः स्वामी बभूव अस्ति। यस्मिन् परमात्मनि विश्वरूपाः सकलज्ञानस्वरूपाः वेदाः ऋगादयः निहिताः स्थिताः सन्ति। तेन ओदनेन सर्वग्राह्यत्वेन परमात्मना मृत्युम् अतितराणि मृत्युसागरं तराणि पारं यामीत्यर्थः। ६॥ य इति = यः सर्वव्यापी महेश्वरः परमात्मा वेदादिषु वेदादिसत्यशास्त्रेषु गायत्री = गायत्रीस्वरूपमस्ति। तदुक्तं तेन ब्रह्मणा प्रोक्तं गायत्रीवचनं यदा यस्मिन् काले योग्यं शांतं योग्यमस्ति तत् तस्मात् कारणात् मे मम जीवस्य मनः शिवसंकल्पं कल्याणविचारवत् अस्तु॥

मासानामिति - मासानाम् चैत्रवैशाखादिमासानां मध्ये मार्गशीर्षः मासः अहमस्मि।

(मू· गी·) मासानां मार्गशीर्षोऽहम्।

(वेदगी·) सहंश्च सहस्यश्च हेमन्तिकावृतू अग्नेरन्तःश्लेषोऽसि। यजुः १४।२७

सह इति = सहः मार्गशीर्षः मासः अग्नेः सर्वप्रकाशकस्य परमात्मनः अन्तःश्लेषः विभूतिस्वरूपोऽन्तर्लग्नः असि अस्मि पुरुष प्रत्ययः।२७

ऋतूनामिति = ऋतूनां शिशिरादिऋतूनां मध्ये कुसुमाकरः वसन्तः अहमस्मि । ३५ ॥

(मू० गी०) ऋतूनां कुसुमाकरः ॥ ३५ ॥

(वेद० गी०) अयं पुरोभुवस्तस्य प्राणो भौवायनो वसन्तः
प्राणायनो गायत्री — ॥ य० ॥ १३।५४

अयमिति = अयं वसन्तः वसन्तर्तुः पुरोभुवः पूर्वं यो भवतीति पुरोभूः सनातनः तस्य पुरोभुवः सनातनस्य परमात्मनः प्राणः प्राणस्वरूपः विभूतिस्वरूपः भौवायनः स्वसत्तास्वरूपेण स्थितोऽस्ति । तस्य परमात्मनः गायत्री गायत्रीछन्दः प्राणायनः प्राणस्थानमस्ति । ५४ ॥

द्यूतमिति = छलयतां छले कपटं कुर्वतां जनानां मध्ये द्यूतं द्यूतक्रियाऽहमस्मि।

(मू. गी.) द्यूतं छलयतामस्मि।
(वेद गी.) अजैषं त्वा संलिखितमजैषमुत संरुधम्।
अविं वृको यथा मथदेवा मथ्नामि ते कृतम्॥
अथ. कां. ७ सू. ५२ मं. ५
त्वं मायाभिरनवद्य मायिनम्॥ ऋ. मं. १० सू. १४७ मं. २
श्रवस्यता मनसा वृत्रमर्दयः॥ पद्धत "मायाभिरिन्द्र! मायिनं त्वं शुष्णमवातिरः।
विदुष्टे तस्य मेधिराः॥ ऋ. मं. १ सू. ११ मं. ७

अजैषमिति = हे छलकर्तः पुरुष! संलिखितम् द्यूतं छलयतां मध्ये सम्यक्तया ~~स्ववादर्थं सर्वत्र~~ लिखितमपि त्वां त्वां छलकर्तारम् अजैषम् अहं परमात्मैव जयामि। उत अपि च संरुधम् सर्वशुभकर्मणां संरोद्धारमपि त्वाम् अजैषम् जयामि। वृकः अरण्यश्वा अविम् अजं यथा मथत अजमिव मथ्नाति। एव एवं ते तव छलकर्तः कृतं ~~कार्य~~ जातम् मथ्नामि। अहं विनाशयामि। ५॥ त्वमिति = हे अनवद्य! प्रशस्य परमात्मन्! त्वं मायिनं छलं कुर्वन्तं वृत्रं पापिनं छलिनं मायाभिः वञ्चनाभिः बुद्धिविशेषैः श्रवस्यता श्रवणीयं वचनमिच्छता मनसा अर्दयः अहिंसीः॥
हे इन्द्र त्वं मायाभिः मायिनं छलकर्तारं शुष्णं परशोषकं पापं अवातिरः जितवानसि। मेधिराः मेधाविनः तस्य तद्प्रशस्य ते (तादृशं त्वां) विदुः।

तेज इति= तेजस्विनां तेजोवतां वस्तूनां मध्ये तेजः अहमस्मि।
~~जेतॄ~~ जय इति= जेतॄणां मध्ये जयः अहमस्मि।
व्यवसाय इति= व्यवसायिनां पुरुषाणां मध्ये व्यवसायः उद्यमः अहमस्मि।
सत्त्वमिति= सत्त्ववतां ~~सात्त्विकानां~~ बलवतां जनानां मध्ये सत्त्वं ~~सत्त्वमस्मि~~ बलम् : अहमस्मि। ॥३६॥

(मू. गी.) तेजस्तेजस्विनामहम् ॥ जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ३६
(वेद गी.) तेजोऽसि तेजो मयि धेहि ॥ यजुः १९।९
"यश्च विश्वस्य भूत तस्याहमस्मि यशस्तमः" ॥ अथ. ६।३९।३
"जेता नृभिरिन्द्रः पृत्सु शूरः" ॥ ऋ. अष्ट. २ अध्या. ६ व. २१ मं. ३ मंड. १ सू. १७८ मं. ३
"दाशुषः उपाके उद्यन्ता—" ॥ ऋ. अष्ट. २ अध्या. ६ व. २१ मं. ३ " " "
"बलमसि बलं मयि धेहि" ॥ यजुः १९।९

तेज इति= हे परमात्मन् त्वं तेजस्विनां मध्ये तेजः असि तेजः प्रागल्भ्यम् मयि मम हृदि धेहि धारणं कुरु ॥ १९।९
जेता इति= इन्द्रः परमैश्वर्यसम्पन्नः परमात्मा पृत्सु जयकर्त्रीषु सेनासु मध्ये शूरः ~~वीरः~~ शौर्यगुणसम्पन्नः। नृभिः नृणाम् इत्यत्र विभक्तिव्यत्ययः। जेतॄणां नृणां मनुष्याणां मध्ये जेता जयकर्ताऽस्ति।
दाशुष इति= हे परमात्मन्! दाशुषः दानं दत्तवतः यजमानस्य उपाके समीपे उद्यन्ता व्यवसायस्वरूपः असि।
बलमिति= हे परमात्मन्! त्वं बलं सत्त्ववतां सत्त्वं बलमसि अतः बलं सत्त्वं मयि धेहि धारय। १९।९

वृष्णीनामिति = वृष्णीनां ज्ञानवर्षणशीलानां यादवानां मध्ये वासुदेवः सर्वदेववासकः कृष्णो वाऽहमस्मि।
पाण्डवानामिति = पाण्डवानां पाण्डुपुत्राणां युधिष्ठिरादीनां मध्ये धनञ्जयः अर्जुनः अहमस्मि।

(मू॰गी॰) वृष्णीनां वासुदेवोऽस्मि,,
(वेदगी॰) ~~वासयसीव वेधसस्त्वं नः,, ऋ॰ अष्ट॰ ५ अ॰ ७ व॰~~ ४ व॰ ४ मं॰ ६ ऋ॰मं॰३॰ ७सू॰ ३७ मं॰ ६
(मू॰गी॰) पाण्डवानां धनञ्जयः॥
(वेदगी॰) स मिन्द्रो यो धनञ्जयो मयि पुष्यत यद्वसु ,, अथ॰ कां॰ २ सू॰ १४ मं॰ २
नूतन॰ मंत्र॰ "विद्मा हि त्वा धनञ्जयं वाजेषु दधृषं कवे!
अधा ते सुम्नमीमहे,, अथ॰ कां॰ २॰ सू॰ २४ मं॰ ६" यहां सकिरचकित एवं प्रजापती नाम
~~वृष्णीना~~ वासयसीवेति = हे परमात्मन्! त्वं वेधसः स्तोतृजनान् नः अस्मान् वासयसि इव। "इवे दानीमर्थेऽस्ति" इदानीं ज्ञानवर्षणशीलानां मध्ये वासयसि अवस्थापयसि,,॥६॥
स मिन्द्र इति = य इन्द्रः परमात्माऽस्ति स एव धनञ्जयः शत्रूणां धनं जयतीति धनञ्जयः शत्रुधनजेता अर्जुनो वा भगवद्विभूतिरस्ति अत एव मयि परमात्मनि वसु धनधान्यादिपदार्थजातम् संपुष्यत सम्यक्तया दानेन वर्द्धयत॥ २ हे परमात्मन्! (हे कवे! क्रान्तदर्शिन्!) वयं वाजेषु युद्धेषु दधृषं शत्रूणां धर्षकं त्वा त्वां परमात्मानं धनञ्जयम् धनस्य जेतारम् अर्जुनं वा हि निश्चयेन विद्म जानीमहे। अधा अथ ते त्वत्तः सुम्नं सुखम् ईमहे इच्छामः,,

मुनीनामिति = मुनीनां मननशीलानां मुनीनां मध्ये ~~उशना शुक्रः कवि~~ अपि व्यासः वेदविभागकर्ता ऽहमस्मि।
कवीनामिति = कवीनां तत्वज्ञानां क्रान्तदर्शिनां मध्ये उशना शुक्रः कविरहमस्मि ॥३८॥

(मू. गी.) मुनीनामप्यहं व्यासः।
(वेद गी.) . . . . . . . . . . .

(मू. गी.) कवीनामुशना कविः ॥३८
(वेद गी.) अहं कविरुशना पश्यता मा,, ऋ. अष्ट. ३ अध्या. ६ व. १५ मं. १
(यद्वा) मंड. ४ सू. २६ मं. १
आ मा आजदुशना/काव्यः — ,, अथ. २।२५।५

. . . . . . . . . . . . . . . . . .

अहमिति = अहं परमात्मा उशना एतदाख्यः ऋषिः कविः क्रान्तदर्शी अहमस्मि। हे जनाः मा मां सर्वात्मकं पश्यत,, १
आ मा इति = (काव्यः क्रान्तदर्शी यद्वा ज्ञानी उशनाः माः वाणीः आ अजात् उत्तमे पथि चालयति। ५

दण्ड इति = दमयतां दुष्टशिक्षां कुर्वतां दण्डः दण्डक्रियाऽहमस्मि । जिगीषतां जेतुमिच्छतां नीतिः न्यायः अहमस्मि । गुह्यानां गोप्यानां मध्ये मौनं मननशीलत्वं तूष्णींत्वमहमस्मि । ज्ञानवतां ज्ञानिनां ज्ञानम् अहमस्मि ॥ ३८ ॥

(वेदगीता) "[1]दण्डा इवेद् गोअजनास आसन्" ऋ. ७।३३।६ [2]"जयतामिव तन्यतुर्मरुतामेति धृष्णुया" ऋ. १।२३।११

(मू. गी.) [1]दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
[2]मौनं चैवास्मि गुह्यानां [4]ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

(वेद गी.) [3]"मंत्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा" ऋ. ७।३२।१३ "ब्रह्म पदवायं ब्राह्मणोऽधिपतिः" अथर्व १२।५।४

~~त्वां मायाभिरनवद्य मायिनं श्रवस्यता मनसा वृत्रमर्दयः ।~~
~~त्वामिन्नरो वृणते गविष्टिषु त्वां विश्वासु हव्यास्विष्टिषु ॥~~
~~ऋ. मं. १. सू. १३१~~ १४० मं. १

"स देवतानामेको भवति न वै देवाः सर्वे लोके संवदन्ते" [3]"यस्य ब्रह्म वर्धनम्" ऋ. मं. २ सू. १२ मं. १४

~~हे अनवद्य ! हे शुद्ध परमात्मन् ! नरः नेतारः मनुष्याः त्वाम् परमात्मानम् इत एव गविष्टिषु गवां पशूनां अपहृतानां एषणेषु प्रापणेषु स्थानेषु वृणते चौराणां दण्डप्रदानाय संभजन्ते । तथा च अ विश्वासु सर्वासु हव्यासु आह्वातव्यासु प्रार्थनीयासु इष्टिषु यागक्रियासु प्रपदार्थेषु वा त्वामेव मौनस्वरूपं त्वां वृणते संभजन्ते ॥~~ यस्येति = यस्य परमात्मनः ब्रह्म = ज्ञानं वर्धनम् ज्ञानवतां ज्ञानवर्धनम् अस्ति ।

(१) दण्डा इति = गोसंचालका (इव) एव दण्डा आसन् तथाऽहं परमात्मा संसारसंचालनाय दण्डोऽस्मि ।
(२) जयतामिति = (जयतां) जयिनां (मरुतां) मनुष्याणां तन्यतुः नीतिमयः शब्दः धृष्णुया धर्षकया वीरतया सह (एति) प्राप्नोति ।
(३) यज्ञियेषु = यजकार्यप्रियेषु यद्वा सत्संगतियज्ञेषु (अखर्वं) अतीवदीर्घं (सुधितं) उत्तमप्रकारेण धारितं (सुपेशसं) सुन्दरं (मंत्रं) मननशील गुप्त मंत्रं मौनं आदधात = धारयत ।
(४) ब्रह्मेति = ब्रह्म = ज्ञानिनां ज्ञानं (पदवायं) ब्रह्मपदप्रापकं अस्ति । (ब्राह्मणः) ब्रह्मज्ञानी परमात्मा (अधिपतिः) तस्माऽधिपतिरसि ।

यच्चेति = हे अर्जुन! यत् च सर्वभूतानां सर्वेषाम् आकाशादीनां बीजम् उत्पत्तिकारणं तदेव अहमस्मि। मया परमात्मना विनाभूतं चराचरं जंगमस्थावरात्मकं यद् वस्तु स्यात् तत् नास्ति ॥ ३९ ॥

(मू.गी.) यच्चापि सर्वभूतानां बीजं तदहमर्जुन।
न तदस्ति विना यत्स्यात् मया भूतं चराचरम् ॥ ३९ ॥

(वेदगी.) अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ ३ ॥
ऋ. अष्ट. ८ अध्या. ८ व. ४१ मं. ३ ऋ. मं. १० सू. १८३ मं. ३

अहमिति = अहं परमात्मा एव ओषधीषु शाल्यादिधान्येषु पुष्पफलोत्पत्त्यर्थं गर्भं बीजं अदधाम धारयामि "कालव्यत्ययः"
विश्वेषु सर्वेषु भुवनेषु भूतजातेषु अन्तर्मध्ये अहमेव गर्भं बीजं अदधाम धारयामि। तथा पृथिव्यां भूम्यां प्रजाः
सर्वान् जीवमात्रान् तत्तत्कर्मभिः अहम् अजनयम् जनयामि। जनिभ्यः जायाभ्यः स्वस्मात् स्वजातिम् उत्पादयि
त्रीभ्यः अपरीषु अन्यासु अपि उत्पादकशक्तिमतीषु जातिषु पुत्रान् सन्ततीः अहम् अजनयम् उत्पादयामि।
निमित्तभूतेन मया सर्वं वस्तुजातम् उत्पाद्यते अतः अहं सर्वपदार्थहेतुरस्मि ॥ ३ ॥ यथा बृहदा. अध्या. १ ब्रा. ४ श्रु. ५
"सोऽवेदहं वाव सृष्टिरस्मि अहं हीदꣳ सर्वमसृक्षीति"

नान्त इति = हे परंतप! हे अर्जुन! मम परमात्मनः दिव्यानां दीव्यति क्रीडतीति दिव्या त्रिगुणात्मिका प्रकृतिः ततो जाताः दिव्याः तासां दिव्यानां विभूतीनाम् अन्तः नास्ति प्रकृतिविकाराऽनन्त्यात् मद्विभूत्यानन्त्यमस्ति। मया परमात्मना एषः सम्प्रति उपदिश्यमानः विभूतेः विस्तरः उद्देशतः संक्षेपेण प्रोक्तः कथितः। ४०।

(मू. गी.) नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥

(वेद गी.) अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एना पृथिव्यैतावती महिम्ना संबभूव ॥८॥
ऋ. मं. १. सू. १२५ मं. ८ अथ. कां. ४ सू. ३. मं. ८

अहमिति = अहं परमात्मैव विश्वा = विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा बीजरूपेण अहमेव परमात्मा उत्पादयन् ~~अन्य~~सहायरहित एव प्रवामि प्रवर्ते। तत्र दृष्टान्तः। वात इव = वातः परेण अप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वदहमेव स्वेच्छया बीजरूपत्वात् प्रवामि। परो दिवा = परस् सकारान्तः शब्दः अधस् अधस्तात् इतिशब्दवत् परः परस्तात् इत्यर्थो भवति। अधस्तात् इव परस्तात् शब्दयोगेऽपि तृतीया। दिवा आकाशेभ्यो परस्तात्। एना पृथिव्या = "द्वितीयाटौस्स्वेनः" इति इदमः एनादेशः "सुपां सुलुक्" इति तृतीयायाः आच् आदेशः। अस्याः पृथिव्याः परः परस्तात्। "द्यावापृथिव्योरुपादानम् उपलक्षणम्"। एतदुपलक्षितात् सर्वस्मात् विकारजातात् परस्तात् वर्तमानोऽहं चैतन्यस्वरूपं ब्रह्म महिना महिम्ना माहात्म्येन एतावती एतावान् महान् बीजरूपोऽस्मि। आरभमाणा, एतावती, द्वयोः लिङ्गव्यत्ययः। एतावत् = एतच्छब्दात् "यत्तदेतेभ्यः —" इति वतुप् "आ सर्वनाम्नः" इत्यात्वम् ॥८॥

यदिति = यत् यत् सत्त्वं चेतनमचेतनं वा वस्तु विभूतिमत् समृद्धिमत् वा श्रीमत् शोभनं ऊर्जितं तपोभिर्महत्तरम् दृश्यते । हे अर्जुन! त्वं तत् तत् एव वस्तु मम परमात्मनः . तेजोंऽशसंभवं तेजयति प्रकाशयतीति तेजः शक्तिः, तस्याः अंशः कला स एव संभवः उत्पत्तिकारणं यस्य तत् मम परमात्मनः तेजोंऽशसंभवम् अवगच्छ निश्चिनुहि जानीहि ॥ ४१ ॥

(मू. गी.) यद् यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवाऽवगच्छ त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥

(वेद. गी.) सो अंगिरोभिरंगिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन् ।
ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विन्द्र ऊती । ४

ऋ. अष्ट. १ अध्या. ६ व. ८ मं. ४ ऋ. मंड. १ सू. १०० मं. ४ यद्वा ऋ. मंड. ४ सू. ७ मं. ९ कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्वर्चिर्वपुषामिदेकम् ,,

सो अंगिरोभिरिति = अंगिरोभिः सप्तम्यर्थे तृतीया । अंगिरःसु = अंगन्ति सर्वेषु कार्येषु प्रधानतां गच्छन्तीति अंगिरसः सर्वकार्यप्रधानाः तेषु अंगिरःसु मध्ये अंगिरस्तमः प्रधानातिप्रधानतरः योऽस्ति स मम विभूतिरस्ति । तथा वृषभिः = सप्तम्यर्थे तृतीया = वृषेषु धर्मात्मसु वृषा धर्मात्मा योऽभूत् भवति । सखिभिः = सप्तम्यर्थे तृतीया ~~सखेषु~~ सखिषु मित्रेषु सखा हितकारी सन् यः वर्तते । ऋग्मिभिः सप्तम्यर्थे तृतीया । ऋग्मिषु स्तोतृषु मध्ये ऋग्मी स्तोता परमभक्तः यः अस्ति गातुभिः सप्तम्यर्थे तृतीया । गातृषु गायकेषु मध्ये यः ज्येष्ठः सर्वतोऽधिकभगवन्नामगायकः अस्ति स एव अंगिरस्तमः, वृषा, सखा, ऋग्मी, ज्येष्ठः भगवद्विभूतिस्वरूपोऽस्ति । एवंविधविभूतिस्वरूपः मरुत्वान् सर्वोत्तमस्वरूप इन्द्रः परमविभूतिमान् परमात्मा नः अस्माकम् ऊती रक्षकः अस्तु । अंगिरोभिः = अगि रगि लगि गत्यर्थोः "अंगिराः अप्सराः" उणा. ४।२३५ इत्योणादिकोऽसुन् प्रत्ययः निपात्यते । ऋग्मिभिः = ऋच् स्तुतौ संपदादिलक्षणे भावे क्विप्, मत्वर्थीयो मिनिः । पदत्वात्कुत्वं ~~और~~ रत्वं स्त्री । गातुभिः = गा स्तुतौ "कमिमनिजनी" त्यादिना कर्मणि तुप्रत्ययः "मरुत्वान्" = पश्यः, इति मतुपो वत्वम् ॥ ४ ॥ यद्वा "हे परमात्मन्! ते कृष्णम् एम = वयं तव कृष्णाख्यस्वरूपशरणं प्राप्नुमः कीदृशं स्वरूपं यस्य परमप्रकाशस्वरूपस्य शोभा भक्तानामग्रे शोभते । पुनः "चरिष्ण्वर्चिः = यस्य तेजसः विस्फुलिंगः वपुषाम् = शरीराणाम् इदेकम् = एकमेव विभूतेः मूलकारणम् । २६८

अथवेति- हे अर्जुन! तव मुमुक्षोः बहुना बहुविधेन अनेन मद्विभूतिविषयकेण ज्ञानेन किं प्रयोजनं स्यात्। अहं परमात्मा कृत्स्नं सर्वं स्थावरजंगमात्मकम् इदं जगत् एकांशेन एकभागमात्रेण विष्टभ्य सर्वतो व्याप्य स्थितोऽस्मि ४२ इति श्रीजगन्नाथशास्त्रि संकलितायां गीतावेदार्थबोधिन्यां दशमोऽध्यायः समाप्तः

(मू. गी.) अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितः जगत्,, ४२
इति श्रीमद्भग. विभूतियोगो नाम दशमोऽध्यायः समाप्तः

(वेदगी.) एतावानस्य महिमा, तो ज्यायांश्च पुरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि,, ऋ. अष्ट. ८ अध्या. ४ व. १७ मं. ३ मं. १० सू. ९० मं. ३
अथ. कां. १९ सू. ६ मं. ३ यजुः ३१।३ साम पूर्वा. आरण्य. प. अध्या. ६ खं. ४ मं. ५

एतावानिति- यत् इदं देवतिर्यङ्मनुष्यात्मकम् अतीतानागतवर्तमानम् अस्तिरूपं यावद् जगत् अस्ति। एतावान् सर्वोऽपि अस्य परमपुरुषस्य परब्रह्मणः महिमा महत् कर्म स्वकीयसामर्थ्यविशेषः। इदं तु तस्य न वास्तवं स्वरूपम्। अतो महिम्नो यथोक्तात् मर्त्योऽमर्त्यलक्षणात् कार्यवर्गात् पुरुषः परमात्मा ज्यायान् अतिशयेन अधिकः वृद्धतरः अस्तीतिभावः। विश्वा- विश्वानि सर्वाणि भूतानि कालत्रयवर्तीनि प्राण्यप्राणिजातानि अस्य परमात्मनः पादः चतुर्थांशः लेशो वा। अस्य परमात्मनः अवशिष्टं त्रिपाद् अंशत्रयात्मकं स्वरूपम् अमृतम् अमरणधर्मकम् विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे अवतिष्ठते ॥३॥ इति श्रीसारस्वतान्वयलैयावास्तव्यन्यायपण्डितजगन्नाथशास्त्रि ओ. टीकृतायां वेदगीतार्थबोधिन्यां दशमोऽध्यायः समाप्तः।

(अथैकादशोऽध्यायारंभः)

"यस्य निःश्वसितं वेदः यस्य गीता वचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युदर्णवम्॥ १॥
"वेदो गीता तथा गीता वेद एव न संशयः। वेदगीता पृथक्त्वं न द्वयोः ब्रह्मप्रकीर्तनात्॥ २॥

अर्जुन उवाच। मदनुग्रहायेति = मदनुग्रहाय मम अनुग्रहाय कृपाकरणाय यत् अध्यात्मसंज्ञितम् आत्मनः नित्यत्वप्रकाशकम् परमम् अत्युत्कृष्टम् गुह्यं गोप्यं यद्वचः यद्वचनं त्वया श्रीमता श्रीकृष्णेन उक्तम् उपदिष्टम्। तेन यथार्थस्वरूपप्रकाशकेन वचसा मम शिष्यभूतस्य अर्जुनस्य अयं भ्रातृमातुलप्रभृतिराममयः मोहः विगतः विशेषेण नाशं गतः १

भवाप्ययाविति = हे कमलपत्राक्ष! हे कमलपत्रनेत्र! यद्वा कं ब्रह्मसुखं स्वरूपानन्दः तम् अलति प्रकाशयतीति कमलम् आत्मज्ञानं यत्, तदेव पतनात् त्रायते इति पत्रम्। कमलञ्च तत्पत्रञ्च कमलपत्रं तेन अक्ष्यते प्राप्यते इति, तत्संबुद्धौ हे कमलपत्राक्ष! ज्ञानैकगम्य! हे परमात्मन्! हि यस्मात् कारणात् त्वत्तः त्वत्परमात्मसकाशात् भूतानाम् आकाशादिपदार्थानाम् भवाप्ययौ = भवः आविर्भावः अप्ययः तिरोभावः, मया अर्जुनेन विस्तरशः विस्तरेण श्रुतौ आकर्णितौ। अव्ययं व्ययरहितं माहात्म्यं महान् सर्वव्यापकः आत्मा स्वरूपं यस्य स महात्मा, तस्य भावः माहात्म्यं सार्वात्म्यं चकारात् सर्वेश्वरत्वं त्वत्तः श्रुतम्॥ २॥ एवमिति = हे परमेश्वर! हे परमात्मन्! त्वम् आत्मानम् आत्मस्वरूपम् यथा येन प्रकारेण आत्थ उक्तवान् असि। एतत् एवमेवास्ति। हे पुरुषोत्तम! हे पुरुषश्रेष्ठ! ते तव पुरुषोत्तमस्य परमात्मनः ऐश्वर्यं सर्वसामर्थ्योपेतम् रूपं स्वरूपं द्रष्टुम् निरीक्षितुम् इच्छामि॥ ३॥

(मू॰ गी॰) अर्जुन उवाच। मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्। यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम॥ १॥ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया। त्वत्तः कमलपत्राक्ष! माहात्म्यमपि चाव्ययम्॥ २॥ एवमेतद्यथात्थ त्वमात्मानं परमेश्वर!। द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम!॥ ३॥

(वेदगीता) : : : : : : : : : : : : : :

मन्यसे इति = हे प्रभो! हे स्वामिन्! तत् स्वस्वरूपं मया शिष्येण अर्जुनेन द्रष्टुम् अवलोकयितुम् शक्यम् इति यदि त्वं श्री कृष्णः मन्यसे जानासि। हे योगेश्वर! योगः कर्मयोगः ज्ञानयोगश्च ~~भक्ति~~यो उपासनायोगश्च तेषामीश्वरः तत्संबुद्धौ हे योगेश्वर! ततो मे मह्यं त्वम् अव्ययं विनाशरहितम् आत्मानं स्वस्वरूपं दर्शय निरीक्षय ॥ ४॥

(मू. गी.) मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो!।
योगेश्वर! ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४॥
(वे. गी.) आविष्कृणुष्व रूपाणि मात्मानमपगूहथाः।
अथो सहस्रचक्षो! त्वं प्रतिपश्याः किमीदिनः ॥ ५
अथ. कां. ४ सू. २० मं. ५

आविष्कृणुष्वेति = हे सहस्रचक्षो! हे सर्वतो द्रष्टः परमात्मन्! त्वं स्वस्वरूपं यदि मया द्रष्टुं शक्यं मन्यसे तर्हि रूपाणि स्वस्वरूपम् आविष्कृणुष्व प्रकटीकुरु। आत्मानं स्वस्वरूपम् मा अपगूहथाः मा पिधेहि। अथो अपि च त्वं ममोपदेष्टा परमात्मा किमीदिनः किमिदानीं किमिदानीमितिवासनामयं मम मनः प्रतिपश्यः अवलोकय ॥ ५॥

श्रीभगवान् उवाच। पश्येति = हे पार्थ! हे अर्जुन! मे परमात्मनः दिव्यानि प्रकाशमयानि नानावर्णाकृतीनि नानावर्णानि नानाकाराणि नानाक्रियाणि नानाप्रकाराणि शतशः सहस्रशः असंख्यातानि अद्य इदानीमेव पश्य अवलोकय। हे भारत! हे अर्जुन! मयि आदित्यान् वसून् रुद्रान् अश्विनौ मरुतः पश्य। तथा तेनैव प्रकारेण बहूनि असंख्यातानि अदृष्टपूर्वाणि पूर्वं केनाऽप्य दृष्टानि आश्चर्याणि अद्भुतानि रूपाणि पश्य निरीक्षस्व। ५। ६॥

श्रीभगवानुवाच

(भ० गी०) पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः। नानाविधानि दिव्यानि
नानावर्णाकृतीनि च ॥५॥ पश्यादित्यान् वसून् रुद्रानश्विनौ
मरुतस्तथा। बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥६॥

(वेदगी०) दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि। एता जुषत मे गिरः ॥ १८
ऋ० अ० १ अध्या० १ व० १९ मं० १८ मं० १ सू० २५ मं० १८

दर्शन्निति = हे जीवात्मन्! विश्वदर्शतं विश्वैः सर्वैः दर्शतं दर्शनीयं भक्ताऽनुग्रहार्थं सर्वत्राऽऽविर्भूतं मम परमात्मनः स्वरूपं नु खलु दर्शं पश्य = लोटि लिङ्‌थादेशः। क्षमि क्षमायां पृथिव्यां रथं नानावर्णान् आदित्यादिकानां देहान् अधि आधिक्येन दर्शं पश्य। एताः उच्यमानाः मे मम परमेश्वरस्य गिरः वचनानि जुषत पालय। दर्शम = "इरितो वा" इति ... अङादेशः "ऋदृशोऽङि गुणः" इति गुणः। विश्वदर्शतम = "भृमदृशि" इत्यादिना इत्यौणादिकः अतच् प्रत्ययः। क्षमि = "आतो धातोः" इत्यत्रात इति योगविभागादाकारलोपः ॥ १८ ॥

इहेति = हे गुडाकेश! हे अर्जुन! इह अस्मिन् मम देहे विराड्देहे सचराचरं चराचर सहितम् एकस्थम् एकस्मिन् स्थाने वर्तमानं कृत्स्नम् समग्रं जगत् अद्य पश्य अवलोकय। यत् च एतद्भिन्नं शत्रुपराजयं यत् द्रष्टुम् इच्छसि अभिलषसि तदपि मम देहे पश्य।७॥

(मू॰गी॰) इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥७॥

(वेदगी॰) अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना।
ऋतस्य मा प्रदिशो वर्धयन्त्यादर्दिरो भुवना दर्दरीमि।४॥
ऋ॰ अष्ट॰ ६ अध्या॰ ७ व॰ ४ मं॰ ४ मंड॰ ८ सू॰ १०० मं॰ ४

हे जरितः! हे स्तोतः जीवात्मन्! अयमहं परमात्माऽस्मि। इह मद्विराड्स्वरूपे मा मां पश्य अवलोकय। अहमेव विराड्स्वरूपोऽहमेव विश्वा = विश्वानि जातानि चराचराणि भूतजातानि मह्ना महत्वेन परमेश्वरत्वेन अभ्यस्मि अभिभवामि। मा मां परमात्मानं ऋतस्य सत्यस्वरूपस्य प्रदिशः प्रदेष्टारो विद्वांसः वर्धयन्ति स्तोत्रैर्वर्धयन्ति। अपि च आदर्दिरः सर्वैरादरणशीलोऽहं भुवना = भुवनानि ~~व~~ ~~वक्ष~~ ~~त्रे~~ भूतानि दर्दरीमि भृशं विदारयामि। अर्थात् सर्वान् स्वकीयान् नाशभूतान् शत्रून् मयि पश्य ॥ ४॥

नत्विति = हे अर्जुन! त्वम् अनेनैव स्वचक्षुषा प्राकृतदेहस्थेन अनेन चर्ममयेन नेत्रेण मां दिव्यं द्रष्टुम् अवलोकयितुम् न शक्यसे न शक्नोषि। अतः ते तुभ्यं दिव्यम् अप्राकृतं तेजोमयं चक्षुः नेत्रं ददामि यच्छामि। यच्चक्षुषा मां द्रष्टुम् ईशिषे, तेन चक्षुषा मे मम ऐश्वरम् ईश्वरसम्बन्धिनं योगं स्वरूपं पश्य अवलोकय। ८॥

(मू-गी-) न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

(वेदगी-) इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष।
एकं यदुद्रा न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥ ६ ॥

ऋ- ५।८५।६ ऋ- अष्ट- ४ अध्या- ४ व- ३१ मं- ६ मं-५ सू-८५ मं-६ यद्वा "आपश्यति प्रतिपश्यति परापश्यति पश्यति। दिवमन्तरिक्षमात् भूमिं सर्वं तद्देवि पश्यति" अथर्व- कां ४ सू- २० मं- १

इमामिति = हे जीवात्मन्! कश्चिज्जनः चर्मचक्षुषा कवितमस्य प्रकृष्टप्रज्ञस्य देवस्य द्योतमानस्य परमात्मनः इमां प्रसिद्धां विश्वस्वरूपां महीं महतीम् मायां दिव्यशक्तिमतीं ~~मूर्तिं~~ तनुं नकिः नैव आदधर्ष नैव धारयितुम् द्रष्टुम् वा शक्नोति। ऊ-नु इति पादपूरणौ। यत् यस्मात् कारणात् एकं परमात्मस्वरूपदर्शनात्मकं कर्म उद्रा ~~[illegible]~~ जलात्मकेन नेत्रेण ~~[illegible]~~ न पृणन्ति न पूरयन्ति। एनी एन्यः शुभ्राः सत्कर्मणि गमनशीलाः आसिञ्चन्तीः स्नेहात्मकेन ~~[illegible]~~ दिव्यनेत्रेण आसिञ्चन्तः अवनयः भगवद्भक्तिपात्रभूता भक्तजनाः समुद्रम् परमेश्वरं समुद्रवन्ति एनं चराचराणि भूतानि इति समुद्रः परमेश्वरः तं समुद्रं परमेश्वरं पृणन्ति भक्त्या पूरयन्ति प्रसादयन्तीत्यर्थः ॥ ६ ॥

दिव्यदृष्टिः जनः तत् सर्वं दिव्यं सर्वं पदार्थं आसमन्तात् पश्यति प्रतिपश्यति दिव्यं पदार्थं प्रतिदिव्यदृष्ट्या पश्यति पराक्पश्यति दूरं दूरतरं पश्यति पश्यति स चदिवं द्युलोकं अन्तरिक्षं तथा भूमिं इत्यादिस्थं सर्वं पदार्थं पश्यति।

एवमिति = हे राजन्! धृतराष्ट्र! महायोगेश्वरः "योगो माया तस्य ईश्वरः अधिपतिः योगेश्वरः, महांश्चासौ योगेश्वरः महायोगेश्वरः हरिः "हरति पापानीति हरिः परमात्मा, ततः पुनः एवं पूर्वोक्तं वचनम् उक्त्वा कथयित्वा पार्थाय अर्जुनाय ~~ऐश्वरम् ईश्वर ईश्वर सम्बन्धि परमम् अत्युत्कृष्टं रूपं स्वरूपं दर्शयामास~~ ॥ बहुमुखम् बहुनयनम् अनेकानि असंख्यानि आश्चर्यकराणि दर्शनानि यस्य तथाभूतम्। अनेकानि दिव्यानि प्रकाशमानानि आभरणानि भूषणानि यस्य तथाभूतम्। दिव्यानि अतिप्रकाशवन्ति अनेकानि उद्यतानि उद्धृतानि आयुधानि चक्रादीनि यस्य तथाभूतं दिव्यानेकोद्यतायुधम्। दिव्यस्रग्वस्त्रधारकं दिव्यगन्धलेपयुक्तं सर्वाश्चर्यस्वरूपं विश्वतोमुखं सर्वतोमुखम् अनन्तम् अपरिच्छिन्नं देवं ज्योतिस्वरूपम् ऐश्वरम् ईश्वरसम्बन्धि परमम् अत्युत्कृष्टं रूपं स्वरूपम् दर्शयामास ॥ ९, १०, ११

संजय उवाच
(मू. गी.) एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः। दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥ अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्। अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥ दिव्यमाल्याम्बरधरं दिव्यगंधानुलेपनम्। सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

(वे. गी.) सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ ऋ. अष्ट. ८ अध्या. ४ व. १७। मं. १ यजुः ३१।१
ऋ. १०।९०।१

सहस्रशीर्षा इति = सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा सहस्रशब्दस्य उपलक्षणत्वात् अनन्तैः शिरोभिः युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयानि एवेति सहस्रशीर्षत्वम् सहस्राक्षित्वं सहस्रपादत्वञ्च। स पुरुषो भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशाङ्गुलम् दशाङ्गुलपरिमितं देशम् अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम् ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्य अवस्थित इत्यर्थः ॥ १ ॥

दिवीति- दिवि आके युगपत् समकालमेव सूर्यसहस्रस्य सूर्याणां सहस्रस्य युगपदुत्थिता समकालमेवोदयं प्राप्ता भाः प्रकाशः यदि भवेत्। सा प्रभा तस्य महात्मनः परमात्मनः भासः प्रकाशस्य सदृशी समानरूपा स्यात् ॥१२, तदा तस्मिन् समये पाण्डवः अर्जुनः देवदेवस्य देवानां प्रकाशकस्य श्रीकृष्णस्य तत्र तस्मिन् शरीरे देहे एकस्थम् एकस्मिन् स्थाने स्थितम् अनेकधा प्रविभक्तम् विभिन्नतया स्थितं कृत्स्नं जगत् प्रपञ्चम् अपश्यत् अवालोकयत ॥१३॥

(मू. गी.) दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता। यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा। अपश्यद्देव-देवस्य शरीरे पाण्डवस्तदा ॥१३॥

(वेदगी.) यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥५॥

ऋ. अष्ट. ६ अध्या. ५ व. ८ मं. ५ (मंड. ८ अनु — सू. ७० मं. ५) अथ. कां. २. सू. ८१ मं. १ महा. कां. २. सू. १२ मं. २ साम ... तै. सं. २, ४, १४, ३ तै. आर. १, ७, ५ निरु. १२।१

यद्द्याव इति = हे इन्द्र! हे परमैश्वर्ययुक्त परमात्मन्! ते तव परमात्मनः प्रतिमानार्थं यत् यदि द्यावः प्रकाशात्मकाः चन्द्रादयः पदार्थाः शतम् एकत्रशतशः स्युः एकत्रिताः भवेयुः तथाऽपि न अष्ट समतां न प्राप्नुवन्ति। उत अपि च भूमीः भूमीस्था अग्न्यादयः पदार्थाः शतम् एकत्रशतशः एकत्रिताः स्युः तथाऽपि न अष्ट तव समतां न प्राप्नुवन्ति। हे वज्रिन्! हे शक्तिमन्! परमात्मन्! त्वा त्वां सहस्रं सूर्याः अगणिताः अपि सूर्याः न अन्वष्ट न अनुगच्छन्ति त्वत्सदृशप्रकाशवन्तः न भवन्ति "न तत्र सूर्यो भाति न चन्द्रतारकम्। नेमा विद्युतो भान्ति कुतोऽयमग्निः। किं बहुना। जातं प्रादुर्भूतं सर्वं वस्तु नान्वष्ट न समतां प्राप्नुवन्ति। तथा रोदसी द्यावापृथिव्यौ त्वत्समतां नाष्ट नाप्नुवन्ति। भवान् सर्वेभ्योऽतिरिच्यते इत्यर्थः। "ज्यायान् पृथिव्याः ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः इति बृहदारण्यके। ५॥

ततइति = ततः पुनः स धनञ्जयः अर्जुनः हृष्टरोमा पुलकितांगः विस्मयाविष्टः विस्मितः सन देवं द्योतमानं श्रीकृष्णं शिरसा मूर्ध्ना प्रणम्य नमस्कृत्य कृताञ्जलिः बद्धाञ्जलिः अभाषत अकथयत ॥ १४ ॥

(मू॰गी॰) ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥
(वेदगी॰) अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु।
नानाहनू विभृते संभरेते असिन्वती बप्सती भूर्यत्तः
ऋ॰ अष्ट॰ ८ अध्या॰ ३ व॰ १४ मं॰ १ मं॰ १०।७९।१ निरु॰

हे परमात्मन
अपश्यमिति = मर्त्यासु मनुष्यरूपासु विक्षु प्रजासु प्रजाहृदये अमर्त्यस्य अमरणस्वभावस्य परमात्मरूपेण वर्तमानस्य अस्य परमात्मनः महतो महनीयस्य महित्वम् अपश्यम् पश्यामि। अस्य परमात्मनः नानाहनू नानामुखानि विभृते विभिन्नतया स्थिते सती संभरेते संभरतः जगद्रक्षणं कुरुतः। ते भगवतः हनू प्रातः, सायम् इत्युभय कालौ असिन्वती असंखादयन्त्यौ स्वयंभोजनरहिते सती बप्सती स्तोतारं स्वस्मिन् गृहीतवत्यौ भूरि प्रभूतं यथा स्यात्तथा अत्तः भक्षयतः इति पश्यामि। १॥

पश्यामीति = हे देव! हे प्रकाशस्वरूप श्रीकृष्ण! तव देहे शरीरे भूतविशेषसंघान् भूतविशेषाः देवतिर्यगादि प्राणिविशेषाः तेषां संघान् समूहान् सर्वान् देवान् इन्द्रादिदेवान् कमलासनस्थं पद्मासने स्थितं ब्रह्माणम् ऋषीन् नारदादीन् दिव्यान् दिव्यस्वरूपान् सर्वान् उरगान् शेषादीन् पश्यामि ॥ १५ ॥ ईशं शिवम्।

अर्जुन उवाच

(भ. गी.) पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान्।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

(वेदगी.) यत्रादित्याश्च रुद्राश्च वसवश्च समाहिताः। भूतं च यत्र भव्यञ्च
सर्वे लोकाः प्रतिष्ठिताः स्कंभं तं ब्रूहि कतमः स्विदेव सः ॥ २२ ॥
अथ. कां. १० सू. ७ मं. २२ यद्वा "यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यार्पिताः" अथ. १०।७।१२

यत्रेति = यत्र यस्मिन् ब्रह्मविराड्देहे आदित्याः सूर्यादयः प्रकाशकाः लोकाः रुद्राः रुद्रदेवताः वसवः अष्टौ वसुसंज्ञकाः देवाः समाहिताः सम्यक्तया स्थिताः विद्यमानाः सन्ति। यत्र यस्मिन् विराड्देहे भूतं प्रादुर्भूतं जगत् भव्यं भविष्यत् जगत् च सर्वे लोकाः सर्वे भूतविशेषसंघाः प्रतिष्ठिताः स्थिताः सन्ति। तं स्कंभं परमात्मानं ब्रूहि कथय सः कतमः स्विदेव अस्तीति ॥ २२ ॥

हे विश्वेश्वर! विश्वस्वामिन्! हे विश्वरूप! हे सर्वस्वरूप! अनेकबाहूदरवक्त्रनेत्रम् अनेके बाहवः उदराणि वक्त्राणि च यस्य तथाभूतं त्वाम् सर्व अनन्तरूपम् अनन्तानि असंख्यातानि रूपाणि यस्य तथाभूतं तं त्वां पश्यामि अवलोकयामि। तव न अन्तं पश्यामि तव न मध्यं पश्यामि तव न आदिं पश्यामि ॥ १६ ॥

(मू० गी०) **अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥१६॥**

(वेदगी०) **अतो विश्वान्यद्भुता चिकित्वाँ अभिपश्यति। कृतानि या च कर्त्वा ॥ १**
**ऋ० अष्ट० १ अध्या० २ व० १८ मं० १** मं० १ सू० २५ मं० ११

अत इति = चिकित्वान् प्रज्ञावान् जीवात्मा अतः अस्मिन् परब्रह्मणः विराड्देहे विश्वानि सर्वाणि अद्भुता = अद्भुतानि अनेकबाहूदरवक्त्राद्याश्चर्याणि या = यानि कृतानि आश्चर्यमयानि कर्माणि पूर्वं परब्रह्मणा कृतानि सन्ति चकारादन्यानि यानि आश्चर्याणि कर्त्वा इतः परं कर्तव्यानि भविष्याणि तानि सर्वाणि अभिपश्यति अवलोकयति। अद्भुता = "शेश्छंदसि बहुलम्" इति शेर्लोपः। प्रत्ययलक्षणेन "नपुंसकस्य झलचः" इति नुम्। नलोपः। चिकित्वान् = कित ज्ञाने लिटः क्वसुः "अभ्यासहलादिशेषकुत्वानि। "वस्वेकाजाद्घसाम्" इति नियमादिडभावः। हल्वोऽनुनासिकाः वकौ संहितायाम्। कर्त्वा = कृत्यार्थे तवैकेन्केन्यत्वनः" इति करोतेस्त्वन् "शेश्छन्दसि बहुलम्" इति शेर्लोपः।

किरीटिनमिति= तेजोराशिं तेजोनिधिं सर्वतो दीप्तिमन्तं प्रकाशस्वरूपं दीप्तानलार्कद्युतिम् दीप्तः अतिशयेन ज्वलन्तौ वह्निसूर्यौ तत्सदृश द्युतिमन्तम् अप्रमेयम् अपरिच्छिन्नं समन्तात् सर्वतः दुर्निरीक्ष्यं दुःखेन निरीक्षितुम् शक्यं किरीटगदाचक्रयुक्तं त्वाम् अहं पश्यामि अवलोकयामि ॥१७॥

(मू॰ गी॰) किरीटिनं गदिनं चक्रिणञ्च तेजोराशिं सर्वतो दीप्तिमन्तम्।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥
(वेदगी॰) त्वमिन्द्राऽभिभूरसि त्वं सूर्यमरोचयः
विश्वकर्मा विश्वदेवो महाँ असि ॥ २ ऋ॰ अष्ट॰ ६ अध्या॰ ७ व॰ १ मं॰ २ (ऋ॰ मंड॰ ८ सू॰ ९८ मं॰ २) अथ॰ कां॰ २॰ सू॰ ६२ मं॰ ६ साम ...

त्वमिति= हे इन्द्र! हे परमात्मन्! त्वम् अभिभूः असि सर्वेषां तेजसाम् अभिभविताऽसि अर्थात् सूर्यानलादितेजसोऽपि त्वम् अधिकं तेजस्वी असि। त्वम् सूर्यम् आदित्यम् अरोचयः स्वदत्तैः तेजोभिः अदीपयः। त्वं विश्वकर्मा विश्वं ~~[illegible]~~ जगत् कर्म कृत्यं यस्य तथाभूतः विश्वकर्मा जगत्कर्ताऽसि। विश्वदेवः विश्वेषां बहूनां देवः उपास्यदेवः असि अतः महान् ~~सर्वाधिकः~~ पूज्यः महत्तरः वाऽसि। ६॥

त्वमिति=यत् अक्षरं नित्यकूटस्थम् परमम् अत्युत्कृष्टं वेदितव्यं भक्तजनैः ज्ञातव्यमस्ति तत् त्वमसि। विश्वस्य जगतः अत्यन्तं निधानं बीजं त्वमसि। अव्ययः विनाशरहितः शाश्वतधर्मगोप्ता शश्वद्भवतीति शाश्वतो वेदः, तेन प्रतिपादिता ये धर्माः ज्ञानकर्मोपासना: सन्ति तेषां गोप्ता रक्षकः त्वमसि। सनातनः, सदा तनः सनातनः पुरुषः अपि पुराणपुरुषोऽपि त्वं मे मतः। १८॥

(मू.गी.) त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम्।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥

(वेदगी.) उरुः कोशो वसुधानस्तवायं यस्मिन्निमा विश्वा भुवनान्यन्तः।
स नो मृड पशुपते नमस्ते परः क्रोष्टारो अभिभाः श्वानः परो यन्त्वघरुदो
विकेश्यः ॥ अथ. कां. ११ सू. २ मं. ११

हे मृड! हे सुखस्वरूप परमात्मन्! हे पशुपते! पश्यतीति पशुः जीवः तस्य पतिः स्वामी पशुपतिः, तत्संबुद्धौ हे पशुपते! हे जीवाधिपते! परमात्मन्! अयं तव विराड्देहः उरुः महान्, कोशः सकलभुवननिधानम्, वसुधानः वसूनां वसवः जीववासकाः सूर्यपृथिवीप्रभृतयः धानाः त एव कणाः सन्ति। यस्मिन् विराड्देहे इमा इमानि सर्वतः परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवना भुवनानि लोकाः अन्तः मध्ये प्रविष्टा सन्ति ते तुभ्यं परमात्मने नमः नमस्कारोऽस्तु। परः परा: अपरे क्रोष्टारः रोरुयमाणाः जीवाः शृगालादयो वा अभिभाः स्वतेजःप्रभावेण परतेजोऽभिभावकाः सिंहादयः जीवाः। श्वानः कुक्कुराः, अघरुदः = पापाचरणाच्छेतोः रोरुयमाणाः ये दुष्टा जीवाः सन्ति तथा परः = पराः अपरे विकेश्यः केशशून्या जीवाः सन्ति ते सर्वे त्वयि विद्यन्तेऽतः त्वं पुरुषोत्तमोऽसि ॥११॥

अनादीति=अनादिमध्यान्तम् आदिमध्यान्तविहीनम् अनन्तवीर्यम् अनन्तम् अपारं वीर्यं पराक्रमः यस्य तादृशम्। अनन्तबाहुम् अपरिसंख्याबाहुं शशिसूर्यनेत्रं शशी सूर्यश्च नेत्रे यस्य सः शशिसूर्यनेत्रस्तं तादृशं दीप्तहुताशवक्त्रं दीप्तः प्रकाशमानः हुताशः अग्निः वक्त्रं मुखं यस्य तं दीप्तहुताशवक्त्रं स्वतेजसा स्वभासा इदं विश्वं जगत् तपन्तं प्रज्वलन्तं त्वां पश्यामि अवलोकयामि ॥१९॥

(मू॰गी॰) अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम्।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

(वेदगी॰) यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः।
अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥३३॥
अथ॰ कां॰१० सू॰७ मं॰३३

यस्येति=यस्य ब्रह्मणः सूर्यः आदित्यः च तथा पुनर्णवः पुनःपुनरुत्पद्यमानः चन्द्रमाः शशी चक्षुः नेत्रे स्तः। यः परमात्मा अग्निम् अनलम् आस्यं मुखं चक्रे करोति। तस्मै तादृशाय ज्येष्ठाय सर्वतो महते आदिमध्यान्तशून्याय ब्रह्मणे बृहत्स्वरूपाय परमात्मने नमः नमस्कारोऽस्तु ॥३३॥

द्यावेति=हि यस्मात् कारणात् त्वया एकेन विराडात्मना द्यावापृथिव्योः भूम्याकाशयोः अन्तरम् अन्तराले व्याप्तम् पूर्णम् । सर्वाः प्राच्यादिकाः दिशः त्वया एकेन व्याप्ताः । चराचरात्मकं सर्वं विश्वं त्वया परिपूर्णमस्ति । हे महात्मन् ! तव विश्वात्मनः तव अद्भुतम् आश्चर्यकरम् उग्रं भयप्रदम् इदं विराडात्मकं रूपं स्वरूपं दृष्ट्वा अवलोक्य लोकत्रयं लोकत्रये वर्तमानं प्राणिजातं प्रव्यथितं व्याकुलं भवतीति शेषः ॥ २० ॥

(मू. गी.) द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

(वेद गी.) यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता ।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यर्पिताः ॥ १२ ॥ ऋ. मं. ३ सू. ३४ मं. ३

अथ. कां. १० सू. ७ मं. १२ यद्वा "अग्निर्द्यावापृथिवी विश्वजन्ये आभाति देवी अमृते अमूरः क्षयन् वाजैः पुरुश्चन्द्रो नमोभिः" ऋ. अष्ट. ३ अध्या. १ व. २१ मं. ३ मं. ३ सू. ४५ मं. ३ यद्वा "यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः । यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे" ऋ. अष्ट. १ अध्या. ७ व. १२ मं. २ ऋ. मं. १ सू. १०१ मं. ३

यस्मिन्निति=यस्मिन् ब्रह्मणि भूमिः पृथिवी अन्तरिक्षम् आकाशः । यस्मिन् द्यौः प्रकाशमानाः दिशः अध्याहिताः व्याप्यत्वेन स्थिताः सन्ति । यत्र ब्रह्मणि अग्निः प्रचण्डः अग्निः चन्द्रमाः शान्तिकरः शीतलस्वभावः शशी, सूर्यः आदित्यः वातः वायुः आ समन्तात् अर्पिताः आश्रिताः सन्तः तिष्ठन्ति वर्तन्ते ॥ १२ ॥ यद्वा अग्निरिति=अमूरः अमूढः सर्वज्ञः क्षयन् सर्वस्य जगतः ईशानः अत एव पुरुः सर्वेभ्यः महान् चन्द्रः दीप्तस्वरूपः यद्वा पुरुश्चन्द्रः=पुरुचन्द्रः बहुदीप्तस्वरूपः वाजैः बहुवेगवद्भिः : नमोभिः नमस्कारैः स्तुतः अग्निः अग्निवत्सर्वत्रव्यापकः परमात्मा विश्वजन्ये विश्वस्य जनयित्र्यौ यद्वा विश्वं जन्यम् उत्पाद्यं याभ्यां ते देवी द्योतमाने अमृते मरणधर्मरहिते द्यावापृथिवी द्यावापृथिव्यौ आभाति आ समन्तात् प्रकाशयति । क्षयन् क्षि ऐश्वर्ये । पुरुश्चन्द्रः=ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे—इति सुडागमः "श्रुत्वेन शकारः" ॥ यद्वा "यस्येति=यस्य परमात्मनः महत् अत्यधिकं पौंस्यं व्याप्तिबलं द्यावापृथिवी द्यावापृथिव्योरन्तरं व्याप्यवर्तते यस्य परमात्मनः व्रते नियमनरूपे कर्मणि वरुणः जलाभिमानी देवः अर्थात् जलं सूर्यः च वर्तते अर्थात् तदाश्रयं सर्वे देवाः वर्तन्ते । सिन्धवः नद्यः यस्य इन्द्रस्य सर्वैश्वर्यसम्पन्नस्य परमात्मनः व्रतं आज्ञात्मकं कर्म सश्चति वचनव्यत्ययः सश्चन्ते गच्छन्ति ईश्वरेच्छया प्रवहन्तीति भावः । तं मरुत्वन्तं परमात्मानं सख्याय समानख्यानप्राप्तये हवामहे । सश्चति गतिकर्मा ॥ २९३

तथा नृसिंह ता. उ. खं. २ श्रु. ४ "कस्माद् उच्यते भीषणम् । यस्माद्भीषणं यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्च न बिभेति । भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चमः"

अमीति = हि यस्मात् कारणात् अमी एते सुरसंघाः देवसमूहाः त्वां विशन्ति तव समीपं गच्छन्ति। केचित् जनाः भीताः त्वद्रूपदर्शनात् भयं प्राप्ताः सन्तः ~~तव समीपं गच्छन्ति~~ प्राञ्जलयः बद्धहस्ताः सन्तः त्वां गृणन्ति स्तुवन्ति। एतस्मिन् समये महर्षिसिद्धसंघाः महर्षियोगिवन्दाः स्वस्ति कुशलम् अस्तु इत्युक्त्वा पुष्कलाभिः बहुभिः स्तुतिभिः स्तवनैः त्वां परमात्मानं स्तुवन्ति। २१।

(मू० गी०) अमी हि त्वां सुरसंघा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥२१॥

(वेद० गी०) गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे॥ साम० प्रपा० ४ खं० १२ पूर्वार्चिक मं० १
ऋ० मं० १ सू० १० मं० १२

गायन्तीति = हे शतक्रतो! हे बहुकर्मन्! हे बहुप्रज्ञ! हे परमात्मन्! गायत्रिणः सवन्नाम गातारः सुरसंघाः त्वा त्वां परमात्मानं गायन्ति गानेन स्तुत्वा विशन्ति। अर्किणः अर्चनाप्रतिपादकैः मंत्रैः त्वां उपासमानाः "परमेश्वरोपासकाः" महर्षिसिद्धसंघाः, त्वद्दण्ड भीताः अर्कम् अर्चनीयम् त्वा त्वां परमात्मानम् अर्चन्ति प्राञ्जलाः सन्तः पूजयन्ति प्रशंसन्ते च। ब्रह्माणः ब्राह्मणः त्वा त्वां परमात्मानं वंशमिव स्ववंशोद्भवादि पुरुषमिव वंशः वनशयो भवंति। वननात् श्रूयते इति वा नि० ५।(४) उच्चतरं मन्यन्ते। गायत्रिणः = गायत्रं साम येषामुद्गातॄणाम् अस्ति ते गायत्रिणः "अत इनिठनौ" इन् प्रत्ययः। अर्चन्ति = अर्कः देवो भवति यदेनमर्चन्ति (नि० ५।४) अर्च — पूजायाम्। अर्क अर्च्यन्त्येभिः इत्यर्काः मंत्राः तैः अर्चनीयतया तदात्मक इन्द्रोऽपि लक्षणयार्कः "पुंसि संज्ञायां घः प्रायेण" पाणि० ३।३।११८, इति करणे घः "चजोः कु घिण्यतोः" पाणि० ७।३।५२ इति चकारस्य कत्वम् अर्किणः = अर्काः मंत्रा ईश्वरो वा एषां सन्तीत्यर्किणः परमेश्वरोपासकाः। एकाद्वारा कृतो जातेः सप्तम्यां च न तौ स्मृतौ पा० ५।२।११५ इति कृदन्तादिनिठनौ यद्यपि प्रतिषिद्धौ तथाऽप्यत्र व्यत्ययादिनिः। वंशमिव = इवेन समासो विभक्त्यलोपः। येमिरे = यम उपरमे। १

रुद्रादित्या इति = रुद्राः एकादश रुद्रदेवताः आदित्याः द्वादशादित्याः वसवः अष्टौ वसुदेवताः तथा च ये साध्याः अन्ये विश्वे विश्वेदेवाः अश्विनौ अश्विनीकुमारौ मरुतः मरुद्देवताः उष्मपाः पितरः गंधर्वाः यक्षाः असुराः सिद्धानां संघाः सर्वे विस्मिताः सन्तः आश्चर्यान्विताः त्वां वीक्षन्ते अवलोकयन्ति ॥ २२॥

(मू॰ गी॰) रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसंघा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥

(वेदगी॰) आदित्या रुद्रा वसवः ~~दिव्याः विभवाः देवाः पार्थिवासः~~ जुषन्तेमिदं ब्रह्म क्रियमाणं नवीयः। शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः।
ऋ॰ अष्ट॰ ५ अध्या॰ ३ व॰ ३॰ मं॰ १४ (ऋ॰ मं॰ ३॰ ७ सू॰ ३५ मं॰ १४)
अथ॰ कां॰ १९ सू॰ ११ मं॰ ४ यद्वा, "आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनाति धामां ते मां भद्राय शवसे ततक्षुः अपराजितमस्तृतम् अषाळ्हम् ऋ॰ मं॰ १॰ अनु॰ ४ सू॰ ४८ मं॰ ११

आदित्या इति = आदित्याः द्वादशादित्याः रुद्राः एकादशरुद्रा देवताः वसवः अष्टौ वसुदेवताः दिव्याः दिवि भवाः अन्तरिक्षस्था साध्यादि देवताः पार्थिवासः पृथिव्यामुत्पन्नाः यक्षासुरसिद्धसंघाः गोजाताः वाग्मिनः गंधर्वाः यद्वा गोः पृश्नेः जाताः मरुतो देवताः यज्ञियासः यज्ञदीक्षिताः पुरुषाः सन्ति। ते सर्वे नः मदीयं क्रियमाणं ~~[illegible]~~ विधीयमानं प्रादुर्भूतं वा नवीयः नवतरम् अद्भुतम् इदं ब्रह्म बृंहणशीलं विराट्स्वरूपं जुषन्ताम् सेवन्ते वीक्षन्ते इति भावः।
पार्थिवासः = अञ्जसेरसुक् ,, ४। यद्वा आदित्यानां रुद्रियाणां रुद्राणां देवानां धाम स्थानं देवः परमात्मा न मिनाति नहिनस्ति।
हे जीवात्मन् ते आदित्यादयो देवाः मा मां परमात्मानं भद्राय स्वकल्याणप्राप्तये शवसे बलप्राप्तये च ततक्षुः ~~[illegible]~~ ॥११॥ यतनो, आत्मानं सूक्ष्मीकुर्वन्ति।
अपराजितं केनाऽप्यजितम् अस्तृतम् अहिंसितम् अषाळ्हम् केनाऽप्यनभिभूतं) आत्मिक शारीरिक

रूपमिति= हे महाबाहो! हे कृष्ण! ते तव बहुवक्त्रनेत्रं बहुमुखनयनं बहुबाहूरुपादं बहवः बाहवः भुजाः ऊरवः सक्थीनि पादाः चरणाश्च यस्य तथाभूतं बहूदरं बहवः उदराः यस्य तथाभूतं तं बहुदंष्ट्राकरालं बहुभिः दंष्ट्राभिः करालं भयावहं महत् बहुपरिमाणं रूपं स्वरूपं दृष्ट्वाऽवलोक्य लोकाः जीवाः प्रव्यथिताः प्रकर्षेण दुःखं प्राप्ताः तथा तेनैव प्रकारेण अहमपि व्यथितः अस्मि ॥२३॥
नभःस्पृशमिति= हे विष्णो! हे सर्वव्यापक परमात्मन्! हीति निश्चये। नभःस्पृशम् आकाशवत्सर्वस्पर्शिनं यद्वा अत्युच्चतरम् दीप्तं विशेषप्रकाशेन प्रकाशमानम्। अनेकवर्णं बहुविधरूपं व्यात्ताननं विस्फारितमुखं दीप्तविशालनेत्रं प्रकाशमानविशालचक्षुष्कं त्वां दृष्ट्वाऽवलोक्य प्रव्यथितान्तरात्मा प्रकर्षेण व्यथितः दुःखितः अन्तरात्मा मनः यस्य तथाभूतोऽहं धृतिं धैर्यं शमं शान्तिं च न लभे ~~न प्राप्नोमि~~ विन्दामि ।२४॥

(मू॰ गी॰) रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम्। बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥ नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम्। दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥२४॥
(वेदगी॰) त्वद्भियेन्द्र पार्थिवानि विश्वान्यच्युता चिच्च्यावयन्ते रजांसि। द्यावाक्षामा पर्वतासो वनानि विश्वं दृळ्हं भयते अज्मन्ना ते॥ ऋ॰ अष्ट॰ ४ अध्या॰ ७ व॰ ३ मं॰ २ (मं॰ ६ सू॰ ३१ मं॰ २)

त्वद्भियेति= हे इन्द्र! हे विष्णो! हे सर्वव्यापक ~~परमात्मन्~~ त्वत् त्वदेतादृशविराडस्वरूपतः भिया भयेन विश्वा= विश्वानि सर्वाणि पार्थिवानि रजांसि पृथिव्यादिलोकवर्तिनः सर्वे प्राणिनः अच्युताचित् न केनचिदपि च्यावयितुं शक्याः अपि च्यावयन्ते भयेन व्यथिताः पतन्ति। अपि च ते तव अज्मन् अज्मनि विराड्स्वरूपे प्रकटे सति द्यावाक्षामा आकाशपृथिवीवासिनः स्थलचरनभश्चरजीवाः पर्वतासः पर्वतवद्दृढचित्ताः लोकाः वनानि वनवासिनः सर्वे प्राणिनः भयते भयं प्राप्नुवन्ति। किं बहुना विश्वं सर्वं दृळ्हं दृढतरं प्राणिजातं भयते बिभेति ॥२॥

दंष्ट्राकरालानीति = हे जगन्निवास! गच्छतीति जगत् तेषां जगतां निवासः जगन्निवासः तत्संबुद्धौ हे जगन्निवास! हे देवेश! दीव्यति प्रकाशते इति देवः सर्वम् ईष्टे चेष्टयतीति ईशः। देवानाम् ईशः स्वामी देवेशः तत्संबुद्धौ हे देवेश! ते तव दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि कालानलसंनिभानि प्रलयकालीनाग्निसदृशानि मुखानि दृष्ट्वा अवलोक्य दिशो न जाने पूर्वादिदिशः न बोधामि। न च शर्म सुखं लभे प्राप्नोमि अतः प्रसीद त्वं प्रसन्नो भव ॥ २५

(मू. गी.) दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि।
दिशो न जाने न लभे च शर्म प्रसीद देवेश! जगन्निवास ॥२५॥
(वेदगी.) विश्वम्भर विश्वेन मा भरसा पाहि स्वाहा ॥ अथ. कां. २ सू. १६ मं. ५

विश्वम्भरेति = हे विश्वम्भर! विश्वं ब्रह्माण्डं बिभर्तीति विश्वम्भरः, तत्सम्बुद्धौ हे विश्वम्भर! हे जगत्पालक! परमात्मन्! मा मां त्वद्विराड्स्वरूपदर्शनात् भीतं मां विश्वेन सर्वेण भरसा भीतिनिवारणपूर्वकं पालनरक्षणशक्त्या पाहि पालनं कुरु प्रसीद इति स्वाहा इति सु सम्यक्तया आह निवेदयामि। यथा च यास्क आह "स्वाहाकृतयः स्वाहेत्येतत् सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा (निरु. ८।२०) ५ ॥

*यथा प्रदीप्तं ज्वलनं पतंगा विशन्ति नाशाय समृद्धवेगाः तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

अमीति=अमी इमे सर्वे धृतराष्ट्रस्य पुत्राः दुर्योधनादयः अवनिपालसंघैः नृपसमूहैः सह त्वां विशन्ति त्वयि प्रवेशं कुर्वन्ति । भीष्मः द्रोणः तथा अस्मदीयैः योधमुख्यैः द्रुपदधृष्टद्युम्नादिभिः सह असौ सूतपुत्रः कर्णः त्वरमाणाः शीघ्रतां कुर्वन्तः दंष्ट्राकरालानि दंष्ट्रैः विकृतानि भयानकानि भयंकराणि ते तव वक्त्राणि मुखानि विशन्ति । तथा केचित् तत्र केचित् योधाः चूर्णितैः चूर्णीकृतैः उत्तमांगैः मूर्द्धभिः उपलक्षिताः सन्तः दशनान्तरेषु दन्तछिद्रेषु संदृश्यन्ते ॥ यथा येन प्रकारेण नदीनां बहवः अम्बुवेगाः जलप्रवाहाः समुद्रमेव अभिमुखा द्रवन्ति । तथा तेन प्रकारेण अमी नरलोकवीराः मर्त्यलोकशूराः भीष्मप्रभृतयः तव ~~वक्त्राणि मुखानि~~ अभिविज्वलन्ति प्रकाशमानानि मुख वक्त्राणि मुखानि विशन्ति ॥ २६, २७, २८ ॥ यथेति-समृद्धवेगाः सम्यक्तया वृद्धिं प्राप्तः वेगः येषां ते समृद्धवेगाः पतंगाः शलभाः यथा येन प्रकारेण नाशाय मृत्यवे प्रदीप्तं प्रज्वलितं ज्वलनम् अग्निम् विशन्ति । तथैव तेनैव प्रकारेण समृद्धवेगाः लोकाः भीष्मादयः नाशाय मृत्यवे तव अपि वक्त्राणि विशन्ति । प्रवेशं कुर्वन्ति ॥ २९

(मू. गी.) अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवाऽवनिपालसंघैः । भीष्मो द्रोणः सूतपुत्र
स्तथाऽसौ सहाऽस्मदीयैरपि योधमुख्यैः ॥२६॥ वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि । केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरु
त्तमांगैः ॥२७॥ यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाऽभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥ यथा [illegible]प्रदी
(वेदगी.) समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥ ४
ऋ. अष्ट. ५ अध्या. ८ व. ९ मं. ४ । साम उत्तरा. अध्या. १७ खं. ४ मं. १
ऋ. मं. ८ सू. ६ मं. ४

समस्येति=विशः त्वयि प्रविशन्त्यः विश्वाः सर्वाः कृष्टयः प्रजालोकाः अस्य इन्द्रस्य परमात्मनः मन्यवे मननं मननसाधनं स्तोत्रं तदर्थे यद्वा मन्यवे क्रोधाय संनमन्त सम्यक्तया स्वत एव नमन्ति त्वयि प्रवेशं कुर्वन्ति । तत्र दृष्टान्तः । समुद्रायेव सिन्धवः यथा समुद्रं जलधिं प्रति सिन्धवः स्यन्दनशीलाः नद्यः स्वयमेव नमन्ति तद्वत् । नमन्त=नमतेः कर्मकर्तरि छन्दसो लङ् "न दुहस्नुनमामिति," यकृत्निषेधः प्रतिषेधः ॥ १ ५

लेलिह्यसे इति=ज्वलद्भिः जाज्वल्यमानैः वदनैः मुखैः समन्तात् सर्वतः परिवर्तमानान् समग्रान् सर्वान् लोकान् शत्रुलोकान् ग्रसमानः ग्रासमात्रं कुर्वन् त्वं लेलिह्यसे अतिशयेन लेहनं कुरुषे। हे विष्णो! तेजोभिः स्वभाभिः समग्रं सकलं जगत् विश्वम् आपूर्य व्याप्य तव उग्राः प्रचण्डाः भासः तेजांसि प्रतपन्ति तापं कुर्वन्ति ॥३०॥

(मू.गी.) लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो! ॥३०॥
(वेद.गी.) सहस्राक्षमतिपश्यं पुरस्तात् रुद्रमस्यन्तं बहुधा विपश्चितम्॥
मोपाराम जिह्वयेयमानम् ॥१८ अथ. कां. ११ सू. २ मं. १८

*हे परमात्मन्!

सहस्राक्षमिति=*अहं जीवात्मा पुरस्तात् स्वसम्मुखे सहस्राक्षं सहस्रैः नेत्रैः प्रकाशमानं रुद्रं रुद् दुःखं तस्य द्रावयितारं यद्वा रुत् स्तुतिः तया गन्तव्यं रुद्रं यद्वा रुद्रं भयानकस्वरूपं विपश्चितम् विशेषेण पातीति विपा वाक् विपाः वाचः चिनोतीति विपश्चित् तं समग्रस्य विश्वस्य ज्ञातारं बहुधा बहुप्रकारेण अस्यन्तं सर्वान् लोकान् स्वतेजसा इतस्ततः प्रक्षिपन्तं जिह्वया ~~स्व~~ स्ववदनस्थया जिह्वाशक्त्या ईयमानं सर्वान् लोकान् लेलिह्यमानम् अपश्यम् पश्यामि अवलोकयामि। एवं-विधं स्वरूपम् मा उपाराम प्राप्तुं न शक्नोमि ॥१८॥

आख्याहीति = हे देववर ! देवाग्रगण्य ! ते तुभ्यं नमः नमस्कारोऽस्तु । प्रसीद त्वं प्रसन्नो भव । उग्ररूपः उग्रं भयावहं रूपं यस्य तथाभूतः भवान् कः प्रलयाग्निरसि महाकालोऽसि, महापुरुषोऽसि इति मे आख्याहि इति वद । आद्यम् आसमन्तात् अन्नं प्रवृत्त आद्यः यद्वा "आदौ भवः आद्यः तं जगदाद्यम् भवन्तं त्वां विज्ञातुम् बोधयितुम् इच्छामि । हि यस्मात् कारणात् अहं साधारणः मनुष्यः तव प्रवृत्तिं क्रूरस्वरूपां प्रवृत्तिं न जानामि ॥ ३१॥

(मू. गी.) आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं नहि प्रजानामि तव प्रवृत्तिम् ॥ ३१॥

(वेद गी.) कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जातवेदो न रिष्याः ।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात ॥ ७॥
ऋ. अष्ट. ८ अध्या. १ व. ११ मं. ७ (मंड. १०. सू. ५१ मं. ७)

कुर्म इति = हे अग्ने ! हे ज्योतिःस्वरूप परमात्मन् ! ते तुभ्यम् आयुः अन्नं नमस्काराख्यं कुर्मः करोमि । "आयुः अन्ननामसु पाठः (निघं. २।७) हे जातवेदः ! जातानि जातानि वेद, जातानि वा विदुः जातप्रज्ञः जातधनः (निरु. ७।१९) हे देववर ! हे सर्वज्ञ ! यथा युक्तः सहस्राक्षादिस्वरूपयुक्तः त्वं न रिष्याः न विनश्यसि अर्थात् त्वां विज्ञातुम् इच्छामि । अथ सुमनस्यमानः असि । प्रसन्नमनस्कः त्वं मयि प्रसन्नः असि भव । हे सुजात ! हे दिव्यजन्मन् ! त्वं हविषः प्रवृत्तिहविषः भागं देवेभ्यः विद्वद्भ्यः स्वभक्तेभ्यो वह धारय ॥ ७॥

श्रीभगवान् उवाच
काल इति=लोकक्षयकृत् लोकविनाशकर्ता प्रवृद्धः प्रचण्डः कालः कालस्वरूपः परमात्मा लोकान् सकलान् मनुष्यान् इह अत्र समाहर्तुं संग्रहीतुम् विनाशयितुम् प्रवृत्तः लग्नः अस्मि। ये योधाः ये सैनिकाः प्रत्यनीकेषु शत्रुसेनासु अवस्थिताः सज्जीभूय तिष्ठन्तः वर्तन्ते। ते सर्वे त्वाम् ऋतेऽपि त्वद्युद्धप्रवृत्त्यभावेऽपि न भविष्यन्ति न स्थास्यन्ति ॥३२॥

श्रीभगवान् उवाच

(मू०गी०) कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥

(वेदगी०) कालेऽयमङ्गिरा देवोऽथर्वा चाधितिष्ठतः। इमं च लोकं परमं च
लोकं पुण्यांश्च लोकान् विधृतीश्च पुण्याः। सर्वांल्लोकान-
भिजित्य ब्रह्मणा कालः स ईयते परमो नु देवः॥ अथ० कां० १९ सू० ५४ मं० ५

काले इति= अयं देवः प्रकाशमानः अङ्गिराः अंगारइवप्रकाशमानः सूर्यः काले ~~पर~~कालनाम्नि परमेश्वरे "कालः कलयिता सर्वस्य जगतः अनवच्छिन्नकालरूपः परमेश्वरः" तस्मिन् काले परमेश्वरे अधितिष्ठति। अथर्वा शीतलत्वेन न कस्यापि हिंसकः चन्द्रमा यद्वा अथर्वो अहिंसावः= अपि काले परमेश्वरे अधितिष्ठति। सः ~~काल~~ लोकक्षयकृत् कालः परमात्मा ब्रह्मणा स्वमहत्तया ~~यद्वा स्वकारणेन देशकाल वस्तुपरिच्छेदरहितेन सत्यज्ञानानन्दादिलक्षणेन परमात्मना~~ इमं लोकं पुरोवर्तिनं जनं यद्वा सर्वकर्मार्जनस्थानं लोकं भूमिं परमं ~~क~~ उत्कृष्टं कर्मफलभोगस्थानं स्वर्गलोकं पुण्यान् पुण्यकर्मभिः अर्जितान् लोकान् पुण्यात्मनः जीवान् पुण्याः दुःखलेशाऽसंस्पृष्टाः विधृतीः लोकाधारकान् सर्वान् उक्तान् अनुक्तान् जीवान् अभिजित्य जित्वा वशीकृत्य सः परमः सर्वोत्तमः कालः देवः द्योतनशीलः परमात्मा नु एव ईयते सर्वं स्थावरजंगमात्मकं जगत् व्याप्य वर्तते ॥ ५॥

तस्मादिति=यस्मात् त्वम् एतस्या बन्धुहत्यायाः भीतः सन् न योत्स्ये इति वदसि तस्मात् कारणात् त्वम् उत्तिष्ठ युद्धाय सन्नद्धो भव। यशः
कीर्तिं लभस्व प्राप्नुहि। शत्रून् दुर्योधनादीन् रिपून् जित्वा समृद्धं सम्पत्तिमद्राज्यं भुंक्ष्व। एते तव शत्रवः पूर्वमेव एतत्तेजोबलनि
राकरणेन हेतुना मयैव निहताः विनाशिताः सन्ति। हे सव्यसाचिन्! सव्येन वामहस्तेन शरान् सचितुं प्रयोक्तुं शीलमस्येति सव्य-
साची तत्सम्बुद्धौ हे सव्यसाचिन्! हे अर्जुन! त्वं निमित्तमात्रं कारणमात्रं भव ॥३३॥

(मू०गी०) तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम्। तै०सं० १।६।१३।०।१

मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्! ॥३३॥ अथ० को० २०सू० ४२।३ यजु० ८।३९ मं० ३ ८सू० ६ मं० ९ साम

(वे०गी०) "उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः। सोममिन्द्र चमूसुतम्॥" ऋ० अ० ८ ~~...~~ १ मं० ५ मं० २१

* यद्वा "स्थिरो [illegible] अपद्रिषः परिबाधो जहि मृधः। वसु स्पार्हं तदाभर॥" अथ० २०।४३।१

"यजस्व वीर प्र विहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये। हविष्कृणुष्व सुभगो

यथाससि ब्रह्मणस्पतेरव आ वृणीमहे॥" ऋ० अ० २ अध्या० ६ व० २४ मं० २ ऋ० मं० २ सू० २६ मं० २

"अनु त्वा रोदसी उभे क्रक्षमाणमकृपेताम्। इन्द्र यद्दस्युहाभवः॥" ऋ० अ० ६ अध्या० ४ व० २८ मं० ११ मं० ८ सू० ७६ मं० ११

उत्तिष्ठन्निति=हे इन्द्र! हे जीवात्मन्! त्वं चमूसुतं चम्वोः सेनयोः सुतं प्रादुर्भूतं सोमं युद्धोद्वेगकरं सोमरसं पीत्वी पीत्वा ओजसा क्षात्रबलेन सह
उत्तिष्ठन् युद्धाय सुसन्नद्धः सन् शिप्रे हनू दन्तौ अवेपयः शत्रुहननाय कम्पय ॥१॥ हे वीर! हे शूर! यजस्व युद्धभूमिं सेवस्व। मनायतः
मन इव शीघ्रं प्रवर्तमानान् हिंसकान् यद्वा अभिमन्यमानान् शत्रून् प्रति प्रविहि प्रकर्षेण युद्धार्थं गच्छ "वी ~~...~~ गतौ" छान्द
सो ह्रस्वः। वृत्रतूर्ये वृत्राणां शत्रूणां हिंसाहेतुभूते संग्रामे भद्रं मनः चित्तं भद्रं कल्याणं यथा स्यात्तथा कृणुष्व कुरुष्व।
ब्रह्मणस्पतेरनुग्रहात् तव एव जयो भविष्यति। तथा ब्रह्मणस्पतेः ब्रह्मणस्पतये हविः नमस्कृतिरूपं हविः कृणुष्व कुरुष्व।
यथा त्वं सुभगः सुन्दरैश्वर्यसम्पन्नः अससि भवेः। अस्तेर्लेट्यडागमः। ब्रह्मणस्पतेः योगेन शोभनफलः त्वं भविष्यसि। वयं सर्वे
जीवात्मानः ब्रह्मणस्पतेः परमात्मनः अवः रक्षणम् आवृणीमहे आभिमुख्येन प्रार्थयामहे ॥२॥ हे इन्द्र! हे जीवात्मन्!
"युद्धे" क्रक्षमाणं शत्रून् घ्नन्तं त्वा त्वां उभे रोदसी द्यावापृथिव्यौ द्यावापृथिवीवासिनौ इत्यर्थः अन्वकृपेताम् कृपां कुरुताम्।
यत् यस्माद्धेतोः दस्युहा शत्रुहन्ता अभवः भवसि ॥११

द्रोणमिति = हे अर्जुन! त्वं द्रोणं भीष्मं जयद्रथं कर्णं तथा अन्यान् योधवीरान् अपि मया तेजोबलाकर्षणेन हतान् मृतप्रायान् जहि विनाशय। मा व्यथिष्ठाः एते सर्वे बलवत्तराः इति मा व्यथां प्राप्नुहि। युद्धे त्वं सपत्नान् शत्रून् जेताऽसि जेष्यसि अतः युध्यस्व एव युद्धं कुरु ।३४॥

(मू. गी.) द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान्।
मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेताऽसि रणे सपत्नान् ॥३४

वेदगी. प्रसूत इन्द्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून्।
जहि प्रतीचो अनूचः पराचो विष्वक् सत्यं कृणुहि चित्तमेषाम् ॥४॥ पं. ९
अथ. कां. ३ सू. १ मं. ४ ऋ. अष्ट. ३ अध्या. २ व. २ मं. ६ (मं. ३ सू. ३० मं. ६)

यद्वा ^४ यो जिनाति तमन्विच्छ यो जिनाति तमिज्जहि। जिनतो वज्र त्वं सीमन्तमन्वञ्चमनुपातय॥ अथ. कां. ६ सू. १३४ मं. २ ^× ते वज्रः अशनिः प्राणहारकं शस्त्रं शत्रून् रिपून् प्रमृणन् हिंसन् प्रैतु

प्रसूत इति = हे इन्द्र! हे जीवात्मन्! ते तव जयार्थिनः वज्रः शत्रुघातकम् अस्त्रं हरिभ्यां शत्रुप्राणहारकाभ्यां भुजाभ्यां प्रसूतः प्रेरितः सन् अथवा विसृष्टः प्रवता प्रवणेन मार्गेण प्रैतु शत्रून् अभिलक्ष्य शीघ्रं गच्छतु। तथा त्वं प्रतीचः त्वदाभिमुख्यम् आगच्छतः शत्रून् जहि मारय। तथा अनूचः अनुगच्छतः पार्ष्णिग्राहान् रिपून् जहि। तथा पराचः दूराद्देशादागत्य आक्रमणकारिणः शत्रून् यद्वा पलायमानान् शत्रून् जहि मारय। एषां शत्रूणां चित्तं मनः विष्वक् समन्ततः सत्यं त्वमेव सर्वथा जेताऽसीति सत्यमार्गप्रपन्नं कृणुहि कुरु। प्रवता = प्रशब्दादुपसर्गाच्छन्दसि धात्वर्थे इति वतिप्रत्ययः। प्रमृणन् = मृण हिंसायाम्। जहि = हन हिंसागत्योरित्यस्य लोटि सिपो हिरादेशः। तस्मिन् हन्तेर्ज इत्यादेशः। "अतो हेः" इति लुकि प्राप्ते "असिद्धवदत्राभात्" इति शास्त्रस्यासिद्धत्वात् निवृत्तिः। कृणुहि = कृवि हिंसाकरणयोः ॥४॥ यद्वा = य इति^४ यः शत्रुः जिनाति तव हानिं कुरुते तम् अन्विच्छ तदन्वेषणस्य इच्छां कुरु। यः शत्रुः जिनाति त्वां हन्ति तम् इत् तं शत्रुम् एव जहि विनाशय। त्वं जिनतः घ्नतः शत्रोः सीमन्तं शिरस्कं अन्वञ्चम् प्रत्यक्षमेव अनुपातय छित्त्वा पृथिव्यां पातय ॥४॥

^× हे वज्र! हे वज्रधारिन्! वीर पुरुष!

संजय उवाच। एतदिति = किरीटी अर्जुनः वेपमानः विराट्स्वरूपदर्शनजनितभयेन कम्पमानः कृताञ्जलिः बद्धाञ्जलिः सन् केशवस्य श्रीकृष्णस्य एतद्वचनम् एतद्वाक्यं श्रुत्वा आकर्ण्य नमस्कृत्वा नमस्कारं कृत्वा सगद्गदं आनन्दाश्रुजलप्रवाहाऽवरुद्धकण्ठध्वनि यथा स्यात्तथा भीतभीतः अतिशयेन भयं प्राप्तः सन् भूय एव पुनरेव कृष्णम् आह कथयामास ॥ ३५ अर्जुन उवाच
स्थाने इति = हे हृषीकेश! हे श्रीकृष्ण! तव प्रकीर्त्या यशोगानेन जगत् सर्वो लोकः प्रहृष्यति प्रकर्षेण तुष्यति। तव स्तुतिकीर्तनेन जगत् लोकः अनुरज्यते अनुरक्तिं प्राप्नोति। इति यदस्ति तत् स्थाने युक्तम्। इति तव प्रकीर्त्या तव स्तुतिकीर्तनेन भीतानि भयं प्राप्तानि रक्षांसि राक्षसाः दिशः सर्वतोदिशः द्रवन्ति पलायन्ते इति स्थाने इति युक्तम्। सर्वे सिद्धसंघाः सकलाः सिद्धसमूहाः त्वां नमस्यन्ति नमस्कारं कुर्वन्ति इति यदस्ति तत् स्थाने इति युक्तमस्ति।३६।
कस्माच्चेति = हे महात्मन्! महान् महत्तरः आत्मा यस्य स महात्मा, तत्संबुद्धौ हे महात्मन्! सर्वे जनाः गरीयसे सर्वतो गुरुतराय ब्रह्मणः हिरण्यगर्भस्याऽपि आदिकर्त्रे आदिः जनिः कारणं कर्ता नियामकः स चाऽसौ कर्ता तस्मै आदिकर्त्रे ते तुभ्यं कस्माच्च कस्माद्धेतोः न नमेरन् न नमस्कुर्युः। हे अनन्त! नास्ति अन्तः विनाशः यस्य, सः अनन्तः, तत्संबुद्धौ हे अनन्त! हे अन्तरहित! हे देवेश! हे देवानां स्वामिन्। हे जगन्निवास! जगतां निवासः जगन्निवासः, तत्संबुद्धौ हे जगन्निवास! सत् कार्यम्, असत् कारणं तत् त्वमेव। तत्परं कार्यकारणाभ्यां यत्परं भिन्नं विलक्षणम् अस्ति तत् अक्षरं सदैकरसात्मकम् ओंकारस्वरूपं त्वमसि ३७

संजय उवाच

(मू० गी०) एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी। नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥ अर्जुन उवाच
स्थाने हृषीकेश! तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च। रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ॥३६॥ कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे। अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥३७॥

(वेदगीता)

(वेद० गी०) वहन्तो नाम ते देवा येऽसतः परि जज्ञिरे। एकं तदङ्गं स्कम्भस्य असदाहुः परो जनाः,, अथ० १०।७।२५ यत्र असति सत् प्रतिष्ठितं सति भूतं प्रतिष्ठितम्। भूते भव्य आहितम्।
भव्यं भूते प्रतिष्ठितं तवेद्विष्णो बहुधा वीर्याणि। त्वं नः पृणीहि,, अथ० १७।१।१९

त्वमिति = हे अनन्तरूप! हे असंख्यस्वरूप! त्वम् आदिदेवः दीव्यते इति देवः आदिश्चासौ देवः आदिदेवः सृष्टिकर्ता। त्वं पुराणः पुरुषः
त्वं सनातनः पुरुषः असि। त्वम् अस्य विश्वस्य अस्य जगतः निधानमुत्पत्तिस्थानम् असि। वेत्ता सर्वज्ञाता त्वमसि। वेद्यम्
ज्ञेयं सर्वं दृश्यं जगत् त्वमसि। त्वं परम् अत्युत्कृष्टं धाम परं ज्योतिः त्वमसि। त्वया विश्वं सर्वं जगत् ततं व्याप्तम् असि ३८

(मू. गी.) त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्।
वेत्ताऽसि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

(वेदगी.) त्वमध्वर्युरुत होताऽसि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ६ ॥
ऋ. अष्ट. १ अध्या. ६ व. ३१ मं. ६ (मंड. १ सू. ९४ मं. ६) सप्त

उतेशिषे प्रसवस्य त्वमेक इदुत पूषा भवसि देव यामभिः। उतेदं विश्वं भुवनं
विराजसि श्यावाश्वस्ते सवितः स्तोममानशे॥ ऋ. मंड. ५ सू. ८१ मं. ५

ज्योतिःस्वरूप
त्वमिति = हे अग्ने! हे परमात्मन्! त्वम् अध्वर्युः अध्वरस्य विश्वस्य नेता आदिरसि। त्वम् होता सर्वेषामाह्वाता दाता वाऽसि। उत अपि च
त्वं पूर्व्यः पुरातनः पुरुषः असि। त्वं प्रशास्ता प्रकर्षेण सर्वेषां शिक्षकः असि। त्वं पोता पतितानां पावयिता शोधयिताऽसि
त्वं जनुषा आरंभतः पुरोहितः सर्वेभ्यः पुरः हितः स्थापितः असि अतः वेद्यस्वरूपः असि। हे धीर! हे बुद्धिप्रदातः! विश्वा
विश्वानि सर्वाणि आर्त्विज्या = आर्त्विज्यानि ऋत्विजां पूजकानां भक्तानां सम्बन्धीनि कर्माणि विद्वान् जानन् त्वं पुष्यसि।
न्यूनाऽधिक्यभावराहित्येन सम्पूर्णानि करोषि। हे परमात्मन्! तव सख्ये ऽस्माकं त्वया सह सखित्वे वयं मा रिषाम पापैः हिंसि-
ताः न भवाम। यतः त्वया सर्वं विश्वं ततमसि। अतः अस्मान् रक्षेत्यर्थः। जनुषः = जन्मनः पुरोहितः = दधातेः कर्मणि निष्ठा
आर्त्विज्या = ब्राह्मणादित्वात् ष्यञ्। रिषाम = रिष हिंसायाम् ... शः। पद्मार्थ हे सवितः हे जगदुत्पादक परमात्मन्! त्वम्
एक इत् एक एव प्रसवस्य सर्वकर्मणोऽनुज्ञाकरणस्य ईशिषे समर्थोऽसि। ये लौकिकं गमनादिरूपं वैदिकं अग्निहोत्रादिरूपं कर्म अनुतिष्ठन्ते।
तेषां सर्वेषामनुज्ञाते एक एव त्वं प्रभवसि। उतापि च पूषा जगत्पोषकस्त्वमसि। हे देव! हे ज्योतिःस्वरूप परमात्मन्! यामभिः स्वव्याप्तिभिः
इदं विश्वं सर्वं भुवनं प्रपञ्चं भूतजातं वा विराजसि शोभसे। हे परमात्मन्! श्यावाश्वः परमभक्तः ते तव स्तोमं स्तुतिम् आनशे करोति, ४०५
प्रकाशयसि

सखेतीति = तव पुरुषोत्तमस्य इदम् अवलोकमानं महिमानं विश्वात्मकं माहात्म्यम् अजानता अनवबोधयिता मया "अयं कृष्णः मम सखा समानख्यानः मातुलेयः इत्यादि मत्वा ज्ञात्वा "हे कृष्ण! हे यादव! हे सखे! इति प्रमादात् कर्तव्याऽकर्तव्यकर्मोऽनवधानात् प्रणयेन स्नेहेन वाऽपि प्रसभं हठात् यदुक्तोऽवचं वचनम् उक्तम्। हे अच्युत! अथ च विहार शय्यासनभोजनेषु विहारे क्रीडायां शय्यायां शयने, आसने सिंहासनोपवेशने भोजने अन्नादिभक्षणे एकः जनान्तरशून्यः अथवा बहूनां समक्षं संमुखे हे कृष्ण हे मातुलेय इति कृत्याऽवहासार्थं परिहासाय असत्कृतः असि निरादृतोऽसि अवमानितोऽसि। तत् तत्तदपराधार्थं त्वाम् अप्रमेयम् अनिर्वचनीयं क्षामये क्षमस्व इति प्रार्थये ॥ ४१, ४२।

(मू· गी·) सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण! हे यादव! हे सखेति। अजानता महिमानं
तवेदं मया प्रमादात् प्रणयेन वाऽपि ॥ ४१ ॥ यच्चाऽवहासार्थमसत्कृतोऽसि विहा
रशयनासनभोजनेषु। एकोऽथवाऽप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ४२

(वे· गी·) इत्थं श्रेयो मन्यमानेदमागां युष्माकं सख्ये अहमस्मि शेवा।
समानजन्मा क्रतुरस्ति वः शिवः स वः सर्वाः संचरति प्रजानन् ॥ २२ । (आवृतौ)
अथ· कां· ८ अनु· ५ सू· ९ मं· २२ यद्वा "त्वं जामिर्जनानामग्ने मित्रो असि प्रियः। सखा सखिभ्य ईड्यः", ऋ· मं· १ सू· ७५ मं· ४

इत्थमिति = समानजन्मा (सः परमात्मा) समानं एकस्मिन् समये जन्म प्रादुर्भावः यस्य तथाभूतः समानजन्मा वयस्य इत्यर्थः। क्रतुः कर्म विहारशयनासनभोजनादिषु मया सह कर्मकर्ता असि। स वः = एव शिवः कल्याणरूपः असि। मत्कल्याणकर्ताोऽसि। अतः मदीयः सखाऽयमस्ति। सः वः = स एव सर्वाः मया सह सकलाः क्रियाः संचरति संस्कुरुते इति। अहं भक्तः प्रजानन् विदन् शेवा सुखमस्मि सुखभोक्ताऽस्मि। "शेव इति सुखनाम, शिष्यतेर्विकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी विभाषितगुणः शिवमित्यस्य भवति (निरु· १०। १७) इदं सर्वं विचारजातम् इत्थम् अनेनैव प्रकारेण श्रेयः कल्याणकरमिति मन्यमानाः स्वबुद्धिविषये कुर्वन् युष्माकं भवतः भग (आवृतौ) वतः सख्ये मैत्र्याम् आ समन्तात् अगमम् प्राप्तवम् ॥ २२ । यद्वा सो अङ्गिरोभिरङ्गिरस्तमो भूद् वृषा वृषभिः सखिभिः सखा सन्। ऋग्मिभिरृग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विन्द्र ऊती, ऋ· मं· १ सू· १०० मं· ४ अर्थः = सः परमात्मा अङ्गिरोभिः ज्ञानेन प्रज्वलितैः ज्ञानिभिः सह अङ्गिरः भूतमवति ना ज्ञानी अस्ति यद्वा सप्तमी "अङ्गिरःसु अङ्गिरः"। वृषभिः वीरैः सह यद्वा वीरेषु वृषा वीर भूतः भवति। सखिभिः सह यद्वा सखिषु ४०८ सखा सन् वर्तते। ऋग्मिभिः स्तोतृभिः सह यद्वा स्तोतृषु ऋग्मी स्तोता भवति। गातुभिः स्तुतिगायकैः सह यद्वा गायकेषु ज्येष्ठः सर्वश्रेष्ठः अस्ति। एवंविधः इन्द्रः परमात्मा मरुत्वान् (मतो) जीवानां सहायकः सन् ऊती अस्माकं रक्षकः भवतु ॥ ४ ॥ त्वमिति = हे अग्ने! हे ज्योतिःस्वरूप परमात्मन्! त्वं जनानां मनुष्याणां जामिः बन्धुः असि। त्वं जनानां मित्रः असि त्वं जनानां प्रियः असि त्वं सखा सन् सखिभ्यः ईड्यः स्तुत्यः असि ॥ ४

तस्मादिति = यस्मात् भवान् बहुमहत्वसम्पन्नोऽस्ति, तस्मात् हेतोः कायं स्वदेहं प्रणिधाय भूमौ दण्डवत्संस्थाप्य प्रणम्य नमस्कारं कृत्वा ईड्यं सर्वैः स्तुत्यम् ईशं सर्वसामर्थ्योपेतं परमेश्वरं त्वां प्रसादये प्रसन्नं करोमि। हे देव! हे प्रकाशस्वरूप! पुत्रस्य सूनोः अपराधं पिता इव जनक इव सख्युः सुहृदः सखा इव सुहृद् इव प्रियायाः प्रेयस्याः स्त्रियाः अपराधं प्रिय इव मम अपराधं सोढुं क्षन्तुमर्हसि प्रिया यार्हसीत्यत्र सन्धिरार्षः ॥४४॥

(मू.गी.) तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥

(वेदगी.) इन्द्र क्रतुं न आभर पिता पुत्रेभ्यो यथा। शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि॥ साम. ऐन्द्रकां. अध्या. ३ खं. ३ मं. ८
ऋ. मं. ७ सू. ३२ मं. २६ (अष्ट. ५ अध्या. ३ व. २१ मं. २६)

इन्द्रेति = हे इन्द्र! सर्वैश्वर्यसम्पन्न परमात्मन्! नः अस्माकं क्रतुम् दुष्कर्मकृतम् अपराधमयं कर्म आसमन्तात् भर = हर दूरीकुरु यथा येन प्रकारेण पिता जनकः पुत्रेभ्यः पुत्राणाम् अपराधम् अपहरति। हे पुरुहूत! हे पुरुभिः बहुभिः आहूत! अस्मिन् यामनि यमनियमवति ब्रह्मप्राप्तिमार्गे नः अस्मभ्यं (अस्मान्) शिक्ष अपराधक्षमापूर्वकं शिक्षां देहि। जीवाः = त्वद्भिक्षां कामयमानाः ~~जीवाः~~ वयं प्राणिनः ज्योतिः त्वत्प्रदत्तं ज्ञानमयं प्रकाशम् अशीमहि प्राप्नुयाम ॥८॥

अदृष्टपूर्वमिति=अदृष्टपूर्वं पूर्वं कदाचिदपि दृष्टिपथम् अनागतं विराड्रूपं दृष्ट्वाऽवलोक्य हृषितः अस्मि प्रसन्नोऽस्मि। तथाऽपि मे मम मनः चित्तं भयेन व्यथितं दुःखितं भवति। हे देव! हे प्रकाशस्वरूप! हे देवेश! देवस्वामिन्! हे जगन्निवास! हे विराड्स्वरूप! प्रसीद त्वं प्रसन्नो भव। तदेव पूर्वदृष्टं सौम्यं रूपं मे मह्यं दर्शय अवलोकय।४५॥

(मू॰गी॰) अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास॥४५॥

(वेदगी॰) अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः।
यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः॥७॥
ऋ॰अष्ट॰ २ अध्या॰ ३ व॰ १२ मं॰ ७ (मंड॰ १ सू॰ १६३ मं॰ ७) वा॰य॰ २९।१८ तै॰सं॰ ४।६।७।३ निरु॰ ६।८

अत्राते इति=हे परमात्मन्! ते तव उत्तमम् उत्कृष्टतमम्, गोः पदे पृथिव्याः स्थाने यद्वा गवां रश्मीनां पदे स्थाने आकाशे यद्वा युद्धस्थले इषः "कर्मणि षष्ठी" इषम् यद्वा "इषः कर्मणि इषे गच्छत इष गतौ क्विप्" आ समन्तात् जिगीषमाणं गन्तुमिच्छन्तं सर्वत्र व्यापनशीलं रूपम् अत्र अस्मिन् विराड्स्वरूपदर्शनसमये अपश्यम् अवालोकयम् पश्यामि वा। यदा यस्मिन् काले मर्तः मनुष्यः ~~भोगं सुखदुःखप्रापकं कर्म~~ ते तव भोगं सुन्दरं दृष्टमहं शरीरम् अनु+आनट् अनुक्रमेण अटति प्राप्नोति पश्यतीति भावः। आत् अनन्तरम् इत्=एव तदानीमेव ग्रसिष्ठः त्वद्वास्तविकस्वरूपस्य ग्रासितृतमः यद्वा सर्वेभ्यः गरीयान् भक्तः ओषधीः प्रसन्तिरूपाम् औषधीम् अजीगः गिरति भक्षयतीत्यर्थः। प्रकाशयति वा
अजीगः – कालपुरुषप्रत्ययः॥७॥

किरीटिनमिति = हे सहस्रबाहो! सहस्रं बाहवो यस्य, सः सहस्रबाहुः तत्संबुद्धौ हे सहस्रबाहो! हे विश्वमूर्ते! विश्वमेव मूर्तिः यस्य सः विश्वमूर्तिः तत्संबुद्धौ हे विश्वमूर्ते! तथैव पूर्ववदेव किरीटिनं मुकुटधारिणं गदिनं गदाधारिणं चक्रहस्तं चक्रधारिणं त्वां द्रष्टुम् निरीक्षितुम् इच्छामि। चतुर्भुजेन चतुर्भुजस्वरूपेण तेनैव रूपेण युक्तो भव।४६।। मयेति = हे अर्जुन! प्रसन्नेन परितुष्टेन मया तेजोमयं प्रकाशमयं विश्वं विराड्रूपम् अत एव अनन्तम् अन्तविहीनम् इदं दृश्यमानं रूपम् आत्मयोगात् स्वमायायोग बलात् दर्शितम् त्वद्दृष्टिचरीकृतम्। यत् मे मम आद्यम् आदिकाले सर्वकारणं रूपं त्वदन्येन त्वत्तः भिन्नेन न दृष्टपूर्वं पूर्वं केनाऽपि न दृष्टम् ॥४८

(मू. गी.) किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो! भव विश्वमूर्ते! ॥४६॥
श्रीभगवान् उवाच
मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात्।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४८॥

वेदगी. . . . . . . . . . . . . . . . . .
. . . . . . . . . . .

न वेदेति = हे कुरुप्रवीर ! हे कुरुकुलशूरश्रेष्ठ ! हे अर्जुन ! अर्जुन ! अहं परमात्मा नृलोके मनुष्यलोके न वेदयज्ञाऽध्ययनैः वेदानामध्ययनेन तद्दर्शितानां यज्ञानां करणेन च न च दानैः गवादिप्रदानैः न च क्रियाभिः श्रौतस्मार्तकर्मानुष्ठानैः न उग्रैः तपोभिः कठोरैः अग्न्यादितापैः च एवंरूपः एवंविधः विराड्स्वरूपः [illegible] त्वदन्येन त्वत्तः भिन्नेन द्रष्टुं शक्यः । द्रष्टुमशक्योऽहमिति ॥ ४८ ।

(मू. गी.) न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ! ॥ ४८ ॥

(वेदगी.) अयं सोम इन्द्र तुभ्यं सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्वं ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् ॥ १ ॥

साम. उत्तरा. अध्या. १३ खं. ५ मं. १ ऋ. अष्ट. ७ अध्या. ३ व. २८ मं. १ (मं. ९ सू. ८८ मं. १)

अयमिति = हे इन्द्र ! हे जीवात्मन् ! अयम् अहं सोमः परमात्मा [illegible] विराड्रूपं प्रदर्श्य सम्प्रति [illegible] तुभ्यं भक्ताय सोमं शान्तिसम्पन्नम् आकारम् सुन्वे प्रकटयामि । अयम् आकारः तुभ्यं त्वां पवते पवित्रीकरोति । हे भक्त ! त्वम् अस्य = अमुं "द्वितीयास्थाने षष्ठी" आकारं पाहि स्वहृदयाकाशे रक्ष धारय । त्वं भक्तजनः ह = निश्चयेन यं भगवत्कृपादृष्टिविचारं चकृषे आमन्त करोषि [illegible] । त्वं यम् भगवदाकारं [illegible] मदाय आनन्दप्राप्तये युज्याय भगवत्सायुज्यसम्प्राप्तये [illegible] ववृषे स्वसमीपे वृणुषे । सुन्वे = सुनोतेः कर्मार्थे लटि "लोपस्त आत्मनेपदेषु" इति तलोपः ॥ १ ॥

मा ते इति= मम श्रीकृष्णस्य ईदृक् एवंविधं घोरं भयंकरम् इदं रूपं विराट्स्वरूपं दृष्ट्वाऽवलोक्य ते तव व्यथा क्लेशः माऽस्तु। तथा च विमूढभावः किंकर्तव्यविमूढता माऽस्तु। अथ च व्यपेतभीः भयरहितः ~~सन्~~ प्रीतमनाः प्रसन्नचितः सन् त्वम् अर्जुनः मम श्रीकृष्णस्य इदं रूपं चतुर्भुजस्वरूपं पुनः प्रपश्य पुनः सम्यक्तयाऽवलोकय। ४९ ॥

(मू. गी.) मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम्।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥

(वेदगी.) इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि।
यो भद्रो रोचनस्तमुदचामि ॥३८॥ अथ. कां. १४ सू. १ मं. ३८

महावीराः

इदमिति= अहं परमात्मा श्रीकृष्णः रुशन्तं दुष्टहिंसकं घोरं, तनूदूषिम्= तनूनां शरीराणां दूषि दूषकं कम्पनकरम् इदं दृश्यमानं ग्राभं ग्राहं सर्वविश्वग्रहनशीलं विराट्स्वरूपम् अपोहामि संहरामि दूरीकरोमीत्यर्थः। यः भद्रः सुखकारी रोचमानः सुन्दरवर्णः चतुर्भुजः देहः अस्ति। तं देहं उदचामि उत्कृष्टं यथा स्यात् तथा प्रापयामि प्रकटीकरोमीत्यर्थः। अतः हे जीवात्मन् त्वं तं पश्य ॥३८॥

संजय उवाच इत्यर्जुनमिति - महात्मा महान् उत्कृष्टतरः आत्मा यस्य तथाभूतः महात्मा वासुदेवः श्रीकृष्णः तथा पुनः मदीयं चतुर्भुजं रूपं प्रीतमनाः पश्य,, इत्येवम् उक्त्वा कथयित्वा अर्जुनम् स्वकम् आत्मानं रूपं चतुर्भुजस्वरूपं भूयः पुनः दर्शयामास। पुनः सौम्यवपुः भूत्वा सुन्दरदेहः भूत्वा भीतं भयं प्राप्तम् एनम् अर्जुनम् आश्वासयाम भयरहितं विदधे ५०

संजय उवाच

(मू· गी·) इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥

(वेदगी·) . . . . . . . . . . . . .
. . . . . . . . . . . .

अर्जुन उवाच = दृष्ट्वेति = हे जनार्दन ! हे श्रीकृष्ण । तव सौम्यं शान्तिसम्पन्नम् इदं मानुषं रूपं स्वरूपं दृष्ट्वाऽवलोक्य इदानीं साम्प्रतम् प्रकृतिं भयरहितं स्वभावं गतोऽस्मि प्राप्तोऽस्मि । अथाऽपि सचेताः सावधानः संवृत्तोऽस्मि जातोऽस्मि ॥५१॥

अर्जुन उवाच

(मू॰ गी॰) दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

(वेदगी॰) अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः ॥७॥
ऋ॰ अष्ट॰ २ अध्या॰ ३ व॰ १२ मं॰ ७ (मंड॰ १ सू॰ १६३ मं॰ ७)

अत्रा ते इति = हे परमात्मन् ! ते तव उत्तमम् उत्कृष्टतमम्, गोः पदे पृथिव्याः स्थाने यद्वा गवां रश्मीनां पदे स्थाने आकाशे यद्वा युद्धस्थले इषः "कर्मणि षष्ठी" इषम् यद्वा "इषः कर्मणि इषं गच्छत् इष गतौ क्विप् आसमन्तात् जिगीषमाणं गन्तुमिच्छन्तं सर्वत्र व्यापनशीलं स्वरूपम् अत्र अस्मिन् विराड्स्वरूपदर्शनसमये अपश्यम् अवालोकयम् पश्यामि वा। यदा यस्मिन् काले मर्तः मनुष्यः ते तव भोगं सुन्दरं द्रष्टुं योग्यं शरीरम् अनु+आनट् अनुक्रमेण अश्नुते प्राप्नोति पश्यतीति भावः। आत् = अनन्तरम् इत् = एव तदानीमेव ग्रसिष्ठः त्वद्वास्तविकस्वरूपस्य ग्रसितृतमः यद्वा सर्वेभ्यः गरीयान् भक्तः ओषधीः त्वत्प्रसत्तिरूपाम् ओषधीम् अजीगः गिरति भक्षयतीत्यर्थः। अजीगः कालपुरुषप्रत्ययः।

श्रीभगवान् उवाच । हे अर्जुन ! मम परमेश्वरस्य श्रीकृष्णस्य यत् सुदुर्दर्शं सुतरां दुःखेन द्रष्टुं शक्यम् इदं विराट्रूपम् यदस्ति । तद्रूपं त्वं दृष्टवान् असि । देवा अपि मम अस्य रूपस्य नित्यं सर्वदा दर्शकांक्षिणः दर्शनाऽभिलाषिणः भवन्ति । अतः देवानामप्येतद्दर्शनं दुर्लभम् अस्ति । ५१ ॥

(मू.गी.) श्रीभगवानुवाच । सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥५२॥

(वेगी.) रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु । ऋतस्य पथा
प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः ; यजुः ७।४५

रूपेति = हे जीवात्मनः ! वो युष्माकं रूपेण चर्म चक्षुर्ग्राह्येण प्रियेण स्वरूपेण रूपम् स्वस्वरूपम् अभि = व्याप्तम् एव आ = समन्तात् आगाम प्राप्तोऽस्मि निजस्वरूपेण अभ्यागत इत्यर्थः । विश्ववेदाः विश्वं सर्वं वेत्तीति विश्ववेदाः सर्वज्ञः अहं वो युष्मान् विभजतु विभजामि । यथार्हं स्वरूपदर्शनाय विभागं करोमि । तुथः = तुथाः व्यवनव्यत्ययः सर्वेभ्यः भक्तेभ्यः श्रेष्ठाः यूयं ऋतस्य सत्यस्य पथा मार्गेण प्रेत प्रकर्षेण गच्छत । चंद्रदक्षिणाः चंद्रं सुवर्णं दक्षिणा दानं येषां ते चन्द्रदक्षिणाः दातारः त्यागिनः पुरुषाः "चन्द्रमिति हिरण्यनामसु पठः (नि. १।२) स्वः सुखं प पश्यत । इत्यत्र लकारव्यत्ययः । तथा च अन्तरिक्षम् अन्तर्यामिणं परमात्मानम् "अन्तरिक्षं कस्मात् शरीरेषु अन्तरक्षयम् (नि. २।१०) सदस्यैः सदसि स्थिताः सदस्याः ज्ञानिनः तैः सदस्यैः सह प्राप्तुम् यतस्व = प्रयत्नं कुरुत । ४५

पश्यत इति लकार व्यत्ययः वहुवचनमादय

नाहमिति = एवंविधः विराट्स्वरूपोऽहं न वेदैः न वेदाऽध्ययनमात्रेण न तपसा न अग्नितापादिना ~~क्षा~~ तपसा, न दानेन भूम्यन्नगवादिदानेन न च इज्यया श्रौतस्मार्तकर्माऽनुष्ठानमात्रेण द्रष्टुम् शक्यः अस्मि। यथा येन प्रकारेण मां मत्स्वरूपं दृष्टवान् असि अवलोकितवान् असि। हे अर्जुन! हे परंतप! एवंविधः अहं तु अनन्यया विषयान्तररहितया भक्त्या भजनेन इदमेव मुक्तिपदमिति तत्त्वेन याथातथ्येन ज्ञातुं निश्चेतुं द्रष्टुम् अवलोकयितुं साक्षात्कर्तुमित्यर्थः प्रवेष्टुं तत्र ब्रह्मणि अवस्थातुम् च शक्योऽस्मि ॥५३, ५४॥

(मू. गी.) नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं
दृष्टवानसि मां यथा ॥५३॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽ
र्जुन! ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥५४॥

(वेद गी.) न तमश्नोति कश्चन दिव इव सान्वारभम्। सावर्ण्यस्य दक्षिणा
विसिन्धुरिव पप्रथे ॥ ऋ. अष्ट. ८ अध्या. २ व. २ मं. ८ मं. ३.१०. सू. ६२ मं. ९

न तमिति = कश्चन अपि जनः वेदाऽध्ययनमात्रेण केवलं दानेन तपसा यज्ञाऽनुष्ठानेन वा तं परमात्मानम् न अश्नोति द्रष्टुं न प्राप्नोति न समर्थो भवतीति भावः। यथा दिव इव सान्वारभम्, दिवः आकाशस्य सानु सानौ कन्दरायाम् आरभम् आरब्धुमि तदन्तं न प्राप्नोति। सावर्ण्यस्य सवर्णस्य समानस्य भावः सावर्ण्यं तस्य सावर्ण्यस्य सर्वत्र समानतया वर्तमानस्य परमात्मनः दक्षिणा दक्षिणया ~~[illegible]~~ स्वप्रसत्तिदानेन सिन्धुरिव समुद्र इव सर्वत्र स्वभक्तिमाहात्म्येन विपप्रथे विशेषेण प्रथितः प्रत्यक्षीभवितुं प्रसिद्धः भवति ॥८॥

मत्कर्मेति = यः मद्भक्तः जनः मत्कर्मकृत् ममनिमित्ते कर्मकर्ता मत्परमः अहमेव परमः अत्युत्तमः यस्य सः मत्परमः। मद्भक्तः मत्सेवकः सङ्गवर्जितः धनपुत्रादिषु रागरहितः सर्वभूतेषु सर्वप्राणिषु निर्वैरः वैरशून्यः अस्ति। हे पाण्डव! हे पाण्डुपुत्र अर्जुन! स भक्तः मां परमात्मानम् एति प्राप्नोति ॥५५॥ इति श्रीजगन्नाथप्रणीत संकलितायां गीतावेदार्थबोधिन्याम् एकादशोऽध्यायः समाप्तः ॥

(मू.गी.) मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः। निर्वैरः सर्वभूतेषु यः
स मामेति पाण्डव ॥५५॥ इति श्रीमद्भगवद्गीतासु विश्वरूपदर्शनं नामैकादशोऽध्यायः समाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥

(वेदगी.) य आनयत् परावतः सुनीती तुर्वशं यदुम्। इन्द्रः स नो युवा सखा ॥३
साम. अध्या. ४ खं. २ मं. ३ (ऋ. मं. ६ सू. ४५ मं. १) यद्वा "अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत। मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत" अथ. कां. ३ सू. ८ मं. ६

य इति = यः इन्द्रः भक्त्यैश्वर्यसम्पन्नः मद्भक्तः जीवात्मा सुनीती सुनीत्या शोभनसाधननीतिरीत्या तुर्वशं हिंसकस्वभावं यद्वा तुर्वशं कामं संगं यदुं कामयमानमिनी वृत्तिं यद्वा सर्वभूतेषु वैरनियमं परावतः दूरदेशम् आनयत् आसमन्तात् प्रापयत्। सः इन्द्रः भक्त्यैश्वर्यसम्पन्नः यजमानः युवा मद्भक्तिसाधनात् हेतोः नित्यं तरुणः सन् नः अस्माकं = मम परमात्मनः सखा समानख्यानः मम सामीप्यमापन्नः सन् शोभते ॥ तुर्वशम् = तुर्वी हिंसायाम् यद्वा तूर त्वरणहिंसनयोः यद्वा तुर्वशः कामः। यदुम् = यमेर्दुक् यमनेनियम्यते इति यदुः। ^ इति श्री सार्वस्वतान्वयलैयावास्तव्य न्यायभूषण जगन्नाथ शास्त्रि पोतदार ओ. टी. कृतायां वेदगीतार्थबोधिन्याम् एकादशोऽध्यायः समाप्तः
श्रीकृष्णार्पणमस्तु ॥ ॥ ^ अहमिति = अहं परमात्मा मनसा स्वमननशक्त्या मनांसि युष्माकं भक्तानां मनांसि मननशक्तीः गृभ्णामि स्वायत्ती करोमि अर्थात् युष्माकं मनांसि मयि आसक्तानि भवन्ति। मम परमात्मनः चित्तं अनु चेतनशक्त्यनुकूलं चित्तेभिः स्वचेतनशक्तिभिः आ+इत = समन्ततः आगच्छत। अत एव अहं मम परमात्मनः वशेषु अधीने वः युष्माकं प्रियभक्तानां हृदयानि अन्तःकरणानि कृणोमि करोमि अर्थात् यथा ते मत्कर्मकर्तारः भवेयुः। अतः मम परमात्मनः यातं मार्गम् अनुवर्त्मानः अनुकूलं गच्छन्तः आ+इत = मम मुक्तिधाम आगच्छन्ति ॥६

(द्वादशाध्यायारंभः)

"यस्य निःश्वसितं वेदः यस्य गीतावचोऽमृतम्। तत्कृपातोऽर्जुनः यातः कुरुक्षेत्रे युद्धार्णवम्॥१॥
वेदो गीता तथा गीता वेद एव न संशयः। वेदगीतापृथक्त्वं नो द्वयोः ब्रह्मप्रकीर्तनात्॥२॥" अर्जुन उवाच
एवमिति = हे भगवन्! ये भक्ताः एवं त्वत्कर्मनिरतादिप्रकारैः सततयुक्ताः सर्वदाऽभेदभक्त्या युक्ताः सन्तः त्वां परमेश्वरं पर्युपासते
उपासनां कुर्वन्ति। ये च अव्यक्तं सकलेन्द्रियाऽतीतम् अक्षरम् अक्षर ब्रह्म उपासते। तेषाम् उभयविधानां भक्तानां मध्ये के
योगवित्तमाः योगं वेत्तीति योगवित् तेषां मध्ये के श्रेष्ठाः यतयः सन्ति॥१॥

अर्जुन उवाच

(मू. गी.) एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥१॥

(वेदगी.) . . . . . . . . . . . . . . .
. . . . . . . . . . . . . . .

मयीति = ये भक्ताः मयि ममस्वरूपध्याने मनः चित्तम् आवेश्य संस्थाप्य नित्ययुक्ताः मत्कर्मोऽनुष्ठानादिषु लग्नाः सन्तः परया अत्युत्कृष्टया श्रद्धया ईश्वरोपासनेन मुक्तिः सेत्स्यतीति सत्यबुद्ध्या उपेताः मिलिताः सन्तः मां परमेश्वरम् उपासते सेवन्ते। त एव युक्ततमाः योगयत्नगण्याः मे मता मया निश्चिता सन्तीति ॥२॥

श्रीभगवानुवाच

(मू.गी.) मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥

(वेदगी.) श्रद्धां देवा यजमाना वायुगोपा उपासते।
श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ॥४

ऋ. मं. १० सू. १५१ मं. ४ (अध्या. ८ अष्ट. ८ व. ९ मं. ४) तै. ब्रा. २, ८, ८, ७

प्राणायामप्रक्रीयया:

श्रद्धामिति = वायुगोपाः वायुः प्राणापानादिः रक्षितः यैः ते वायुगोपाः। यद्वा "वायुना ईश्वरेण गोपाः रक्षिताः वायुगोपाः देवाः ज्ञानिनः, यजमानाः मत्पूजायां नित्ययुक्ताः सन्तः श्रद्धां श्रद्धा पुरुषगतोऽभिलाषविशेषः तां श्रद्धां स्वान्तः स्थाऽभिलषितं माम् उपासते सेवन्ते। भक्ताः हृदय्यया हृदये भवा हृदय्या तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धामेव उपासते परिचरन्ति। यतः यस्मात् कारणात् श्रद्धया सत्यसंकल्पेन वसु ज्ञानं सर्ववासभूतं परमात्मानं वा विन्दते लभते इति ॥४॥

ये इति = ये तु जनाः इन्द्रियग्रामं मनसा सहितम् इन्द्रियसमूहं संनियम्य संनिरुध्य वशीकृत्य सर्वभूतहितेरताः सर्वेषां भूतानां प्राणिनां हिते कल्याणे रताः लग्नाः सन्तः सर्वत्र सर्वप्राणिषु समबुद्धयः समा एकस्वरूपा बुद्धिर्येषां ते समबुद्धयः सन्तः सर्वत्रगं सर्ववस्तुव्याप्तम् अचिन्त्यम् चिन्ताशक्त्यप्राप्यं कूटस्थं कम्पनरहितम् अचलं स्थिरं ध्रुवं शश्वद्वर्तमानम् अनिर्देश्यम् इदमेतत् इदमेतत् इतिनिर्देशरहितम् अव्यक्तम् सर्वेन्द्रियैः अप्रत्यक्षम् अक्षरम् अक्षरस्वरूपं ब्रह्म पर्युपासते सर्वतः भजन्ते। ते मामेव परमात्मानम् प्राप्नुवन्ति ॥३,४॥

(मू० गी०) ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम्॥३॥ सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः॥४॥

(वेद० गी०) स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः। देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्॥२॥

ऋ० मं० २-सू० २६ मं० ३। तै० सं० २, ३, १४, ३। तै० ब्रा० २, ८, ५, २

स इति = यः यजमानः जनः श्रद्धामनाः मत्पूजायै श्रद्धा मनसि यस्य, स श्रद्धामनाः सन् देवानां ज्ञानज्योतिषा प्रकाशमानानाम् योगिनां पितरं पालयितारं ब्रह्मणस्पतिम् विश्वस्वामिनं परमात्मानं हविषा नमस्कारचरुणा आविवासति आसमन्तात् परिचरति उपास्ते "विवासतिः परिचरणकर्मा"। स इत् स एव भक्तः जनेन जातेन सर्वेण लोकेन वाजम् अन्नादि पदार्थम् भरते बिभर्ति। स एव विशा प्रजया आत्मीयेन बन्धुजनेन सह समभावत्वेन वाजं सर्वेन्द्रियबलम् एकरसतया बिभर्ति। स एव जन्मना जात्या वाजं बलं भरते। स एव नृभिः इन्द्रियप्रभृतिनेतृभिः सह धना धनानि अर्थान् विषयान् संभरते अर्थात् स च यजमानः स्वयं स्वेन्द्रियाद्यधीनः न भवति ॥८॥ छान्दोग्योपनिषदि यथा "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्", "न तत्र चक्षुर्गच्छति न वाग्गच्छति न मनः", "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह", यथा कठो० अध्या० १ वल्ली २ "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन", मुण्डको० मुं० ३ खं० १ श्रु० ८ "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा", तथा मुण्डको० मुं० ३ खं० १ श्रु० ५ "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्। अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः", तथा कठोप० अध्या० १ वल्ली ३ श्रु० १५ "अनाद्यनन्तं महतः परं ध्रुवम्", ८२२

क्लेश इति = हे अर्जुन! अव्यक्तासक्तचेतसाम् अव्यक्ते निराकारे आसक्तं लग्नं चेतः मनो येषां, तेषाम् अव्यक्तासक्तचेतसां निराकार परमात्मध्यानलग्नानां तेषां भक्तानां क्लेशः दुःखम् अधिकतरः भवति। देहवद्भिः देहधारिभिः भक्तैः अव्यक्ता अव्यक्तस्वरूपा गतिः भगवत्स्वरूपावगतिः दुःखं दुःखपूर्वकं यथा स्यात् तथा अवाप्यते लभ्यते ॥ ५॥

(मू. गी.) क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५॥

(वेदगी.) क्षुरस्य धारा निशिता दुरत्यया। दुर्गं पथस्तत् कवयो वदन्ति, कठो. अध्या. १ वल्ली ३ श्रु. १४
"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्। कविर्मनीषी परिभूः स्वयंभूः, यजुः ४०।८
तथा तैत्तिरी. भृगुवल्ली अनु. १० श्रु. ५ "ओं स य एवं वित्। अस्मात् लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रम्य। एतं प्रा
णमयमात्मानमुपसंक्रम्य एतं मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मान
मुपसंक्रम्य इमांल्लोकान् कामान्नी कामरूप्यनुसंचरन् एतत्साम गायन्नास्ते। हा ३ वु हा ३ वु हा ३ वु

ये इति = ये जनाः तु मयि परमात्मनि सर्वाणि कर्माणि श्रौतस्मार्तानि सकलानि कर्माणि संन्यस्य समर्प्य मत्पराः मद्भक्ति-
संलीनाः अनन्येन योगेन विषयान्तरशून्येन भक्तियोगेन मां परमात्मानं ध्यायन्तः ध्यानं कुर्वन्त उपासते सेवन्ते। हे पार्थ!
हे पृथासुत अर्जुन! अहं परमात्मा मयि विश्वात्मके ब्रह्मणि आवेशितचेतसाम् स्थापितमनसां तेषां स्वभक्तजनानाम् अ-
चिरात् दुर्लभेन मृत्युसंसारसागरात् मृत्युसंसारसमुद्रात् समुद्धर्ता पारकर्ता भवामि ॥ ६, ७ ॥

(मू. गी.) ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन
मां ध्यायन्त उपासते ॥६॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात्
भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम् ॥७॥

(वेद) ये वध्यमानमनु दीध्याना अन्वैक्षन्त मनसा चक्षुषा च।[1]
अग्निष्टानग्रे प्रमुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ॥३॥
अथ. कां. २ सू. ३४ मं. ३

*- "यो वै ब्रह्मणो वेदामृतेनावृतां पुरीम्। तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः", अथ. १०।२।२९

ये इति = ये यजमानाः जीवाः मुमुक्षवः अनुदीध्यानाः परमात्मानं ध्यायमानाः सन्तः मनसा मननशक्त्या यद्वा हृदयेन -
चक्षुषा स्नेहवशात् बुद्धिनेत्रेण ऐक्षन्त पश्यन्ति। अग्निः ज्योतिःस्वरूपः देवः ~~देवः~~ स्वभासा देदीप्यमानः परमात्मा
विश्वकर्मा विश्वं कर्म कर्तव्यं कर्म यस्य स विश्वकर्मा प्रजया स्वसृष्ट्या संरराणः सम्यक्तया रममाणः जगदीश्वरः
अग्रे प्रथमम् एव तान् सर्वान् यजमानान् [illegible] प्रमुमोक्तु देहक्लेशबन्धात् विमुञ्चति अर्थात् तान् जीवन्मु-
क्तान् करोति। ऐक्षन्त = ईक्ष दर्शने छान्दसो लङ्। मुमोक्तु = मुञ्च तेश्छान्दसः शपः श्लुः। रराणः = रै धातोर्लिटि
कानच्। अग्निष्टान् = पुष्पाद्यन्ततन्तुष्वन्तः पादमः, इति अग्निष्टान् इत्यत्र सत्वम् ॥ ३ ॥

मय्येवेति = मयि परमात्मनि मनः चित्तम् आधत्स्व धारय। मयि परमात्मनि एव बुद्धिं मतिं निवेशय स्थिरीकुरु। मयि एव परमात्मनि एव निवसिष्यसि वासं करिष्यसि। अत ऊर्ध्वम् एतत्करणानन्तरं मत्प्राप्तौ संशयः नास्ति। वा हे धनञ्जय! हे अर्जुन! अथ यदि चित्तं स्वमनः मयि परमात्मनि स्थिरं समाधातुं निश्चलतया यथा स्यात् तथा स्थापयितुं न शक्नोषि समर्थः नासि। ततः तु अभ्यासयोगेन मां परमात्मानम् आप्तुं लब्धुम् इच्छ इच्छां कुरु ॥९॥

(मू.गी.) मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव
अत ऊर्ध्वं न संशयः ॥८॥ अथ चित्तं समाधातुं न शक्नोषि मयि
स्थिरम्। अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥९॥

(वेदगी.) मयि देवा द्रविणमायजन्तां मय्याशीरस्तु मयि देवहूतिः।
देवा होतारः सनिषन् न एतदरिष्टाः स्याम तन्वा सुवीराः ॥५॥
ऋ. मं. १०. सू. १२८ मं. ५ अथ. कां. ५ सू. ३ मं. ५

मयीति = देवाः ज्ञानिनः विद्वांसः जनाः मयि परमात्मनि द्रविणं सर्वत्र द्रवणशीलं मनः आयजन्ताम् आ समन्तात् निदधतु। आशीः आशासमूहः यद्वा सर्वाश्रयमात्रं वस्तुजातं मयि परमात्मनि अस्तु अर्पितं भवतु। आशीः आश्रयणात् आशीः आशासतेः (निरु ६।८) देवहूतिः देवानां ह्वानं देवपूजनं मयि परमात्मनि अर्पितम् अस्तु। होतारः मदाह्वातारः देवाः सात्त्विका इन्द्रियगणाः नः मयि परमात्मनि एतत् सर्वं अन्तःकरणचतुष्टये सनिषन् मयि प्रवेशं कुर्वन्तु। सनिषन् मूर्धन्यषकार आदिमः सकारश्च निपातितः यद्वा प्रयच्छन्तु। अतः तन्वा मद्भजनाभ्यासपरेण शरीरेण अरिष्टाः अपीडितात्मानः सन्तः सुवीराः ~~इन्द्रसमान~~ मद्दत्तवीर्योपेताः सर्वैः विद्वद्भिः सुवरणीया वा स्याम सन्तु। स्यामेत्यत्र पुरुषव्यत्ययः ॥५॥

अभ्यासे इति = हे अर्जुन! यदि त्वम् अभ्यासे प्रतीकोपासनाऽभ्यासेऽपि असमर्थः अशक्तः असि। तदा मत्कर्मपरमः लौकिकं वैदिकञ्च सर्वं कर्म मत्परं मदर्थं भव। एवंविधः त्वं मदर्थं मन्निमित्तं कर्माणि लौकिकानि वैदिकानि च कर्माणि कुर्वन् सिद्धिं कैवल्यसिद्धिम् आप्स्यसि लप्स्यसे ॥ १० ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।
(मू.गी.) मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

(वेदगी.) अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः।
तं त्वा मन्यो अक्रतुर्जिहीडाहं स्वा तनूर्बलदावा न एहि ॥ ५ ॥
ऋ. मं. १०. सू. ८३ मं. ५ अथ. कां. ४ सू. ३२ मं. ५

अभाग इति = हे प्रचेतः! हे प्रकृष्टज्ञानवन्! हे परमात्मन्! हे मन्यो! हे प्रकाशात्मन्! "मन्युः मन्यतेर्दीप्तिकर्मणः (निरु. १०।२९) तविषस्य महतः तव परमात्मनः क्रत्वा कर्मणा अभागः शून्यः सन् त्वत्कर्मभागशून्य इत्यर्थः। त्वाम् अयजमान इति भावः। अपपरेतः अस्मि त्वत्तः परागतोऽस्मि। तं सर्वतो महान्तं तादृशं त्वां परमात्मानम् अक्रतुः कर्माऽभ्यासशून्यः त्वत्तोषकारककर्मवर्जितः अहं जिहीड, त्वच्छरणमागतोऽस्मि। अथ इदानीं मम स्वा तनूः स्वकीयशरीरभूतः त्वं नः अस्माकं यजमानानां बलदावा बलदाता सन् एहि अस्मत्समीपमागच्छ। बलदावा = डुदाञ् दाने "आतो मनिन् क्वनिब्वनिपश्च" इति वनिप् ॥ ५ ॥

अथैतदिति = अथ यदि एतत् मन्निमित्ते कर्म कर्तुम् अपि अशक्तः असि असमर्थः असि । ततः तर्हि यतात्मवान् यतं वशीकृतं आत्मा मनः येन, तथाभूतः सन् मद्योगम् मयि परमेश्वरे योगः अर्पणं मद्योगः तं मद्योगं मयि सर्वकर्मार्पणम् आश्रितः सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलस्य त्यागं कुरु विधेहि ॥ ११ ॥

(मू. गी.) अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

(वेद गी.) अयं ते अस्म्युप न एह्यर्वाङ् प्रतीचीनः सहुरे विश्वदावन् ।
मन्यो वज्रिन्नभि न आ ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ॥ ६
ऋ. मं. १०. सू. ८३ मं. ६ अथ. कां. ४ सू. ३२ मं. ६

अयमिति = अहं किञ्चिदपि कर्म कर्तुमशक्तः अत अयमहं यजमानः ते तव परमात्मनः योगं शरणम् वा अस्मि । प्रतीचीनः स्वाचरणतः पश्चिमीभूतान् विमुखानित्यर्थः नोऽस्मान् अर्वाङ् अस्मत्संमुखः सन् उपैहि आगच्छ । हे सहुरे हे सहनशील परमात्मन् ! हे विश्वदावन् ! हे विश्वदातः ! हे विश्वम्भर ! हे मन्यो ! हे प्रकाशात्मन् ! हे वज्रिन् ! हे वज्रवत्संहारकारिन् । यद्वा क्रूरनिमित्ते वज्रधारिन् ! हे ब्रह्मन् ! नः अस्मान् अभि आववृत्स्व, अभिमुखम् आवर्तस्व, दस्यून् भवदासत्यपक्षपातिन् कामक्रोधादि शत्रून् हनाव जहि । पुरुषवचन व्यत्ययो । उत अपि च आपेः आप्तम् बन्धुभूतं मां बोधि रक्षणीयोऽयमिति बुध्यस्व । ववृत्स्व = वृशान्दसः शपः श्लुः । हनाव = "आडुत्तमस्य पिच्च" इति आडागमः ॥ ६ ॥

"अर्थात् ते दर्शनं देहि"

श्रेय इति=हीति निश्चये। अभ्यासात् प्रतीकोपासनाऽभ्यासमात्रात् यद्वा श्रवणमात्राऽभ्यासात् ज्ञानं "सर्वं खल्विदं ब्रह्म, सर्वत्र ब्रह्म व्याप्तमस्तीति ज्ञानं श्रेयः मोक्षाय श्रेष्ठतरं साधनमस्ति। ज्ञानात् "ब्रह्म सर्वत्र व्याप्तमस्तीति,, केवल ज्ञानमात्रात् ध्यानं भगवद्ध्यानं विशिष्यते विशेषतरं भवति। ध्यानात् ध्यानमात्रात् कर्मफलत्यागः लौकिक वैदिककर्मणां फलस्य त्यागः मोक्षसाधनाय श्रेयान् अस्ति। त्यागात् सर्वकर्मफलत्यागात् अनन्तरं पश्चात् शान्तिः आत्यन्तिक संसारोपरतिः सिद्ध्यति ॥१२॥

(मू॰गी॰) श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते।
ध्यानात्कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम् ॥१२॥

(वेदगी॰) इन्द्रो जातो मनुष्येष्वन्तर्घर्मस्तप्तश्चरति शोशुचानः।
सुप्रजा सन्त्स उदारे न सर्षद् यो नाश्नीयादनडुहो विजानन् ॥३॥
अथ॰ कां॰ ४ सू॰ ११ मं॰ ३

इन्द्र इति=इन्द्रः परमात्मा मनुष्येषु मनुष्याणाम् अन्तः हृदि जातः "सत्यं ज्ञानमनन्तं ब्रह्म, ज्ञानत्वेन जायते प्रादुर्भवति। अतोऽभ्यासात् ज्ञानं श्रेयः। ज्ञानस्वरूपः स च परमात्मा तप्तः तपःस्वरूपः घर्मः दीप्तः शोशुचानः ध्यानेन अत्यर्थं देदीप्यमानः चरति सर्वत्र वर्तते। अतः ज्ञानादपि भगवद्ध्यानं श्रेयोऽस्तीति। अनडुहः परमात्मनः माहात्म्यं विजानन् विशेषेण अवगच्छन् भगवद्भक्तः जनः न अश्नीयात् कर्मफलासंगं न भुनक्ति। स सुप्रजाः सन् वित्तप्रजोपेतः मोहबन्धनविहीनसन्तानोपेतः सन् उदारे देहाऽवसानकाले उत् अस्मात् शरीरात् उत्क्रान्तः न सर्षत् न संसरति पुनः संसारधर्मान् न प्राप्नोति। किन्तु भगवल्लोकं प्राप्नोति। तप्तः=कर्तरि क्तः। सुप्रजाः="नित्यमसिच् समासान्तः "प्रजामेधयोः,, इत्यसिच् समासान्तः। सर्षत्=सृ गतौ इत्यस्माल्लेटि अडागमः "सिब्बहुलम्,, इति सिप्,, ३॥

अद्वेष्टेति=सर्वभूतानां सकलजीवानाम् अद्वेष्टा द्वेषकर्तृत्वरहितः सर्वभूतानां मैत्रः मित्रतायुक्तः, सर्वभूतानाम् करुणः एव सर्वत्र करुणायुक्तः। निर्ममः "एतन्मम अस्ति, एतन्मम अस्ति,, इति ममतारहितः। निरहङ्कारः निर्गतोऽहङ्कारः अहं कर्ता अहं भोक्ता इति यस्मात् स निरहङ्कारः अहंकाररहितः, समदुःखसुखः = सुखे दुःखे च समबुद्धिः। क्षमी शीतोष्णादिसहनशीलः सततं नित्यं सन्तुष्टः यथालाभेन सन्तोषवान्। योगी ब्रह्मानन्दयोगवान् यतात्मा संयतदेहः संयतमनाः च दृढनिश्चयः दृढः स्थिरः परिपक्वः निश्चयः यस्य स दृढनिश्चयः स्थिरनिश्चयः मयि परमात्मनि अर्पितमनोबुद्धिः अर्पिते स्थापिते मनोबुद्धी येन सोऽर्पितमनोबुद्धिः यः मद्भक्तः मद्भक्तिकर्ता अस्ति। स जनः मे मम परमेश्वरस्य प्रियः स्निग्धः अस्ति ॥ १३, १४ ॥

(मू. गी.) अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च। निर्ममो निरहङ्कारः समदुःख
सुखः क्षमी ॥ १३ ॥ सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिः यो मद्भक्तः स मे प्रियः ॥ १४ ॥
(वेद गी.) सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः।
किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥ १० ॥
ऋ. मं. १०. सू. ७१ मं. १०. अष्ट. ८ अध्या. २ व. २४ मं. १.

सर्वे इति=सखायः सर्वेषु भूतेषु मैत्रीकरुणाद्वेषत्वबुद्ध्या समानख्यानाः हितमत्वेन वर्तमानाः सन्तः सर्वे यतयः सभासाहेन भा तेजः तं सोढुं शक्यः भासाहः भासाहेन सह वर्तते इति सभासाहः तेन सभासाहेन उग्रत्वादिकं सोढुं शक्नुवता सख्या समानख्यानेन समानमित्रेण वा यतिना ज्ञानकीर्त्या आगतेन प्राप्तेन यतात्मना नन्दन्ति सर्वसुखदुःखादिषु हृष्टा भवन्ति। किल्बिषस्पृत् = यत्ते साध्वनुप्रवचनाऽकरणेन यत् किल्बिषं जायते तत् यो बाधते स किल्बिषस्पृत् = अहंकारादिपापरहितः पितुषणिः "पितुः,, इत्यन्ननाम दक्षिणा वा, तं सनोति इति पितुषणिः सर्वेभ्योऽन्नदाता दक्षिणादाता एषां हितः सर्वप्राणिनां हितः हितकारकः वाजिनाय = वाजिनम् इन्द्रियम् तस्मै वाजिनाय इन्द्रियदमनाय अरम् अलं समर्थः भवति ॥ १० " कठो. अध्या. २ वल्ली ३ श्रु. १४ "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते,, तथा च मुंडको. मुंड. ३ खं. २ श्रु. १ "उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः,,

यस्मादिति = लोकः जनः यस्मात् पुरुषात् न उद्विजते विक्षेपं न प्राप्नोति। यः प्राणी हर्षामर्षभयोद्वेगैः हर्षः प्रमोदः अमर्षः असहिष्णुता भयं चोरादि भीतिः, तेषाम् उद्वेगैः विक्षेपैः मुक्तः अस्ति स च प्राणी मे मम प्रियः अस्ति ॥१५॥
लोकात् प्राणिवर्गात् न उद्विजते विक्षेपं न प्राप्नोति। यः प्राणी

(भ० गी०) यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥
(वेदगी०) तदस्य प्रियमभिपाथो अश्यां नरो यत्र देवयवो मदन्ति।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥५॥
ऋ० अ० २ अध्या० २ व० २४ मं० ५ (मं० १ सू० १५४ मं० ५) तै० ब्रा० २, ४, ६, २

तदस्येति = देवयवः देवं द्योतनस्वभावं परमात्मानं यज्ञदानादिभिः इच्छन्तो नरः ज्ञाननेतारः यजमानाः यत्र यस्याम् अवस्थायां मदन्ति तृप्तिमनुभवन्ति। अस्य मुमुक्षोः यजमानस्य तत् पाथः मार्गं प्रियं श्रेष्ठम् अभि अश्याम् अभिप्राप्नोमि। उरुक्रमस्य उरु अत्यधिकं क्रमः संक्रमणं यस्य तथाभूतस्य तस्य विष्णोः सर्वत्र व्यापकस्य परमात्मनः परमे अत्युत्कृष्टे पदे स्थाने मध्वः आनन्दरसस्य उत्सः निष्यन्दो वर्तते। यत्र क्षुत्तृषा जरामृत्युपुनरावृत्यादि भयं नास्ति। यश्च हर्षशोकादिरहितः स च मुक्तो भवति। इत्थम् इत्था उक्तप्रकारेण स हि बन्धुः स खलु परमात्मनः बन्धुः प्रियः भवति ॥५॥

अनपेक्षः = यः अनपेक्षः शुभाऽशुभवस्तुप्राप्तीच्छाशून्यः शुचिः शुद्धः दक्षः कर्मसु कुशलः उदासीनः युक्ताऽयुक्तप्रवृत्तिषु तटस्थः गतव्यथः सन्तापरहितः सर्वारम्भपरित्यागी सर्वकर्मसंन्यासी अस्ति स मद्भक्तः मे मम प्रियः अस्ति। १६।।

(मू. गी.) अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६

(वेदगी.) प्रियास इत्ते मघवन्नभिष्टौ नरो मदेम शरणे सखायः।
नि तुर्वशं नि याद्वं शिशीह्यतिथिग्वाय शंस्यं करिष्यन् ॥८॥
ऋ. अष्ट. ५ अध्या. २ व. ३. मं. ८ (मं. ७ सू. १९ मं. ८)
अथ. कां. २० सू. ३७ मं. ८

प्रियास इति = हे मघवन्! हे परमैश्वर्यवन्! परमात्मन्! ते तव अभिष्टौ इच्छायां नरः मुमुक्षवः मनुष्याः वयं सखायः समानख्यातयः आकांक्षाऽनाकांक्षाशुचिप्रभृतिषु समानस्वभावाः प्रियासः प्रियाश्च सन्तः शरणे त्वदाश्रये मदेम प्रसन्नाः भूत्वा तिष्ठेम। त्वम् अतिथिग्वाय पूजयाऽतिथीन् गच्छतीति अतिथिग्वः तस्मै अतिथिग्वाय पूजनीयपुरुषाय शंस्यं प्रशंसनीयं कार्यं करिष्यन् तुर्वशं हिंसकवशकर्तारं याद्वं यत्नशीलं भक्तं जनं निशिशीमहि स्वकर्तव्याय तीक्ष्णीकुरु (नि, इति पादपूर्तौ) ॥८॥

य इति=यः पुरुषः प्रियवस्तूनि प्राप्ते न हृष्यति हर्षं न प्राप्नोति। यश्च अनिष्टे वस्तुनि प्राप्ते न द्वेष्टि द्वेषं न करुते। यः गतं पदार्थं न शोचति शोकं न करोति। अनागतं वस्तु यः न कांक्षति न इच्छति। यः शुभाऽशुभपरित्यागी इष्टानिष्टवस्तुपरित्यागशीलः भक्तिमान भगवद्भक्तिकर्ता अस्ति स मुमुक्षुः मे मम प्रियोऽस्ति ।।१६॥

(मू-गी-) यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः।।१७

(वेदगी-) प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः
प्रियाः स्वग्नयो वयम् ॥ ३॥ म-१।२६।७
साम-अध्या-१७ उत्त-खं-१ मं-३ ऋ- अष्ट-१ अध्या-२ व-२१ मं-७

प्रिय इति=विश्पतिः विशां प्रजानां पतिः रक्षकः पालकः विश्पतिः। होता सर्वकर्मफलप्रदाता मन्द्रः सदा हृष्टः वरेण्यः वरणीयः परमात्मा नः हर्षशोकलोभशोकशून्यानाम् अस्माकं प्रियः अस्तु। स्वग्नयः=शोभनज्ञानाग्नियुक्ताः वयं मुमुक्षवः अपि प्रियाः भूयास्मेति। वरेण्यः=वृञ् संभक्तौ एण्यप्रत्ययः ।। ३॥

सम इति = यः शत्रौ मित्रे च समः तुल्यः, तथा माने आदरे अपमाने अप्रतिष्ठायां च समः तुल्यः, शीतोष्णसुखदुःखेषु शीते उष्णे सुखे दुःखे च समः समदर्शी भवति। यश्च सङ्गविवर्जितः सांसारिकसम्बन्धविरहितः सन् तुल्यनिन्दास्तुतिः निन्दायां स्तुतौ च तुल्यः एकरसः अस्ति। तथा मौनी वाचंयमः येन केनचिद् वस्तुना सन्तुष्टः प्रसन्नः भवति, तथा अनिकेतः नास्ति निकेतः निवासः यस्य सोऽनिकेतः स्थिरवासरहितः स्थिरमतिः निश्चलमतिः भक्तिमान् भगवन्निष्ठोऽस्ति स ईदृशः भक्तः नरः मे मम प्रियः अस्ति ॥१८; १९॥

(मू॰ गी॰) समः शत्रौ च मित्रे च तथा मानाऽपमानयोः। शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१८॥ तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्। अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥१९॥

(वेद गी॰) यज्ञैः संमिश्लाः पृषतीभिर्ऋष्टिभिर्यामञ्छुभ्रासो अञ्जिषु प्रिया उत। आसद्या बर्हिर्भरतस्य सूनवः पोत्रादा सोमं पिबता दिवो नरः ॥६॥

अथ॰ कां॰ २॰ अनु॰ ६ सू॰ ६७ मं॰ ४ ऋ॰ अष्ट॰ २ अध्या॰ ८ व॰ २५ मं॰ २ मं॰ ३॰ २ सू॰ ३६ मं॰ २

यज्ञैरिति = यज्ञैः स्वाऽध्यायज्ञानयज्ञैः शत्रुमित्रमानाऽपमानादिसमताद्विविधयज्ञैः संमिश्लाः संमिश्राः संयुक्ताः सन्तः पृषतीभिः प्रकाशमानैः ऋष्टिभिः शीतोष्णसुखदुःखमध्ययुगैः यामन् यामनि प्रवाहे स्थिताः सन्तोऽपि शुभ्रासः एकरसत्वेन शोभमानाः अञ्जिषु स्तुतिमयाभरणेषु प्रियाः उत अपि भरतस्य सर्वस्य जगतः भर्तुः पालकस्य परमात्मनः सूनवः पुत्राः भक्ता भूत्वा बर्हिः दर्भमये आसने उपविश्य स्तुतिनिन्दाप्रभृतीनि वस्तूनि परित्यज्य बर्हिषि आसद्य उपविश्य दिवः द्योतनशीलस्य परमात्मनः नरः प्रियाः जनाः पोत्रात् पोतुः संशुद्धियामात् सोमं ब्रह्मभक्तिरसम् आ समन्तात् पिबत पानं कुरुत ॥३॥

परमहंसोप॰ श्रु॰ २ "न शीतं नचोष्णं न सुखं न दुःखं न मानाऽवमाने इति षडूर्मिवर्जितो निन्दागर्वमत्सरदम्भदर्पेच्छासुखदुःखकामक्रोध लोभमोहहर्षाऽसूयाऽहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते,,

ये तु इति = ये तु मद्भावम् आपन्नाः [redacted]: मत्परमाः मत्पराः भूत्वा इदं मोक्षसाधनम् इति श्रद्दधानाः श्रद्धां धारयन्तः धर्म्यामृतम् धर्माद् अनपेतम् अमृतं यथोक्तं यथासीतिप्रतिपादितं पर्युपासते नित्यं सेवन्ते ते भक्ताः मद्भावनास्थिताः मे मम परमेश्वरस्य अतीव अत्यर्थमेव प्रियाः परमप्रेमाश्रयाः भवन्ति २०। इतिश्रीजगन्नाथशास्त्रिसंकलितायां गीतावेदार्थबोधिन्यां द्वादशोऽध्यायः समाप्तः ॥१२।

(मू. गी.) ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥
इतिश्रीमद्भगवद्गीतायां द्वादशोऽध्यायः समाप्तः।
(वेद गी.) आगादुदगादयं जीवानां व्रातमप्यगात्।
अभूदु पुत्राणां पिता नृणां च भगवत्तमः ॥२॥ अथ. कां. २ अनु. २ सू. ९ मं. २

आगादिति = अनेन पूर्वप्रतिपादितफलसिद्धिं दर्शयति ॥ अयं भक्तः धर्म्यामृतं वेदगीतोपदेशं सेवमानः लौकिकबन्धनात् विनिर्मुक्तः आगात् मत्प्रियत्वम् आगच्छति। उदगात् प्राकृतपदार्थेभ्यः उदस्थात् सर्वत्र सुखदुःखादिरहितः सन् उद् गच्छति सर्वोत्कृष्टो भवतीतिभावः। अयं भक्तः जीवानां संसारे जीवतां जनानां व्रातं समूहम् अपि अगात् प्राप्नोति बन्धुजनैः सह निर्लेप इव व्यवहारं करोति। उ = अपि च अयं भगवद्भक्तः पुत्राणाम् आत्मीयानां वृत्तिमयानां नरकरक्षकानां शिष्याणां पिता = स्वाधीनरक्षकः अभूत् भवति। च अपि च नृणां सांसारिकमनुष्याणां मध्ये भगवत्तमः भगवतः अतिप्रियः भक्तः भवति। २ ॥ इतिश्रीसारस्वतान्वयशैवावास्तव्यन्यायभूषणजगन्नाथशास्त्रिज्योतिर्विदो टीकृतायां वेदगीतार्थबोधिन्यां द्वादशोऽध्यायः समाप्तः १२ श्रीकृष्णार्पणमस्तु। श्रीरस्तु ॥

